ग्रन्थाङ्कः—६१

# श्रीगान्धिचरितम्

(इदम्प्रथमतया संस्कृतेनोपनिबद्धो गद्यप्रबन्धः)

रचयिता

प्रो० चारुदेवः शास्त्री

एम०ए०, एम०ओ०एल्०

पुरोवाक्कार :

डा० सत्यव्रतः शास्त्री

दिल्लीविश्वविद्यालयस्य संस्कृत-विभाग आचार्यः, पुरीस्थश्रीजगन्नाथ-संस्कृत-विश्वविद्यालयस्य प्राक्तनकुलपतिः, सम्प्रति थाइदेशस्थबैंकाकनगरे शिल्पाकर-विश्वविद्यालये प्राच्यभाषाविभागेऽभ्यागताचार्यः

प्रस्तावनाकारः

डा० रमाकान्तशुक्लः

महासचिवः, देववाणी-परिषद्, दिल्ली

१९८९




प्रकाशिका

देववाणी-परिषद्, दिल्ली

वाणी-विहारः, नयी दिल्ली-११००५९

(भारतम्)

श्रीगान्धिचरितम्
(संस्कृतगद्यप्रबन्धः)

लेखकः : शास्त्री, प्रो० चारुदेवः

प्रकाशकः : देववाणी-परिषद्, दिल्ली
६, वाणी-विहारः, नई दिल्ली-११००५९

मुद्रकः : प्रवीण प्रिंटिंग सर्विस
३५, टी एक्स्टैंशन उत्तम नगर,
नयी दिल्ली-११००५९

संस्करणम् : द्वितीयम् १९८९ ई०

मूल्यम् : पञ्चाशद् रूप्यकाणि रु० ५०-००




ŚRĪGĀNDHICARITAM
(Sanskrit Gadyaprabandha)

Author : Shastri, Prof. Charudev

Publisher : Devavani Parishad, Delhi
6, Vani Vihar, New Delhi-110059

Printer : Parveen Printing Service
35, T Extn., Uttam Nagar
New Delhi-110059

Edition : Second 1989

Price : Rupees Fifty Only Rs. 50-00

# पुरोवाक्

(लेखकः—डा० सत्यव्रतः शास्त्री, दिल्लीविश्वविद्यालयस्य संस्कृत-विभाग
आचार्यः, पुरीस्थश्रीजगन्नाथ-संस्कृत-विश्वविद्यालयस्य प्राक्तनकुलपतिः,
सम्प्रति थाइदेशस्थबैंकाकनगरे शिल्पाकर विश्वविद्यालये
प्राच्यभाषाविभागेऽभ्यागताचार्यः)

अद्यास्य षष्टिवर्षाणि मम पितृचरणैः प्रणीतस्य श्रीगान्धिचरितस्येदम्प्रथमं प्रकाशितस्य। बन्धुवर्याणां देववाणी-परिषत्संस्थापकमहासचिवानां कविवरेण्यानां डा० रमाकान्तशुक्ल-महाभागानां प्रयासेन पुनरस्य प्रकाशनं भवतीति सम्प्रीणितान्तरङ्गोऽस्मि। मम पितृचरणानामनन्येयं गद्यकृतिः। पाणिनीये व्याकरणे कृतभूरिपरिश्रमास्ते तद्विषय एव व्याकरणचन्द्रोदयाभिधानं ग्रन्थराशिन्यबध्नन्नुपसर्गार्थचन्द्रिकाभिधानं वा ग्रन्थसमुदायमग्रथ्नन्ग्रन्थान्तराणि वाऽरचयन्। कथाऽऽख्यायिकारूपाश्चरितनिरूपणरूपाः कृतीस्तु ऋते श्रीगान्धिचरितात्ते न प्राणयन्। यदि तेऽरचयिष्यन्महदुपकृतमभविष्यत्संस्कृतवाङ्मयस्य। यादृशी प्रसन्नमधुरा पदावली ग्रन्थेऽत्र दृग्गोचरीभवति न तादृश्यन्यत्रेति निर्मार्थं ब्रूमः। अनितरोऽभूत्तेषां वाचि समधिकारः। वर्णनशैल्यप्यनितरैव। भाषास्वारस्ये तेषामभून्महानाग्रहः। अत एव श्रीगान्धिनो भाषणानां लेखानां वा योऽनुवादोऽत्र कृतो पितृचरणैः कृतस्तत्रानुवादत्वप्रतीतिलेशोऽपि नास्ति। सर्वं मौलिकमेव प्रतिभाति। वाच्यमानानि भाषणादीनि मूलरूपेण संस्कृत एवोपनिबद्धानि स्युरित्येतादृश एव कश्चन विलक्षण एवानुभवस्तत्र समुन्मिषति। एतस्मिन्नेवानुवादस्य चरमोत्कर्षः। भाषान्तरेऽपि मूलभाषावदेवार्थप्रतीतिर्भाषान्तरस्वारस्याप्रहाणिश्च।

चरितनायकोऽस्य ग्रन्थस्याधुनिकः। आफ्रीकाभूखण्डे गोराङ्गविरोधः स्वदेशस्वातन्त्र्यप्राप्तये च समुद्योग इत्यादिभिराधुनिकीभिर्घटनाभिस्तस्य सम्बन्धस्तत्र च तस्य महत्त्वपूर्णा भूमिकेति ग्रन्थेऽत्राधुनिकविषयोपन्यासाया-धुनिकशब्दप्रयोगोऽनिवार्यकोटिमाटीकत। यान्त्रिकेऽस्मिन् युगे नूत्नयन्त्रादिकस्याप्युल्लेखो ग्रन्थेऽपेक्षित एवासीत्। तदर्थं नूत्नशब्दप्रयोगोऽपेक्षित इति सोऽपि पितृचरणैः कृतः। तथाहि तार इत्यस्यार्थे 'विद्युद्वार्ता'[1]-शब्दप्रयोग, समाचार-पत्राथ वृत्तपत्र[2] शब्दप्रयोगः, पत्रिकार्थे वार्तापत्र[3] शब्दप्रयोगः, गेस्टहाउस इत्यस्यार्थे पथिकाश्रमशब्दप्रयोगः (विक्टोरियापथिकाश्रमे च वस्तुमारभत[4]), ट्रेन

---

१. श्रीगान्धिचरितम् द्वितीयं संस्करणम्, पृष्ठाङ्कः ६, २१, ५६, ६३
२. तदेव, पृष्ठाङ्कः १७ ३. तदेव, पृ० ७६ ४. तदेव, पृ० ६

इत्यर्थे ४ लौहपथसञ्चारिबाष्पयानशब्दप्रयोगः (चलद्भ्यो लौहपथसञ्चारिभ्यो बाष्पयानेभ्यो भ्रंशितः[5], इतरे विशेषतः स्त्रियो बालाश्च लौहपथसञ्चारीणि बाष्पयानान्यारोहन्[6]), 'वालण्टियर' इत्यर्थे स्वेच्छासेवकशब्दप्रयोगः (स्वेच्छासेवका अनारतमसेवन्त[7]), रेलवेस्टेशन इत्यर्थे च यानविरामस्थानप्रयोगः[8], प्रैस एक्ट इत्यस्य कृते मुद्रण-यन्त्रविधानशब्दप्रयोगः महात्मा मुद्रणयन्त्रविधानमभनक्[9]), बन्दूक इत्यर्थे च यन्त्रगुलिकाप्रक्षेपणीशब्दप्रयोगः (सेनापतिस्तु यन्त्रगुलिकाप्रक्षेपणीरादाय जल्लीयानमगमत्[10]), फ़ायरिंग इत्यर्थे आग्नेयचूर्णप्रक्षेपशब्दप्रयोगः (प्रबोधमन्तरैव च निरायुधेषु तेष्वाग्नेयचूर्णप्रक्षेपं प्रारभत[11]), व्योमयानार्थे आकाशयानशब्दप्रयोगः (आकाशयानेभ्योऽशस्त्रेषु मनुजेष्वाग्नेयास्त्राणि प्राक्षिप्यन्त[12]), वर्किंग कमेटी इत्यस्यार्थे कार्यनिष्पादिकासभाशब्दस्य प्रयोगः, (कार्यनिष्पादिका सभा मुम्बापुर्यां मिलिता, श्रीगान्धिन इदं घोषणापत्रं कार्यनिष्पादिकया कांग्रेससभयाऽन्वमोदि[13]), कलैक्टर (अथवा डिस्ट्रिक्ट मैजिस्ट्रेट) इत्यर्थे नगरपालशब्दप्रयोगः (यदा त आग्नेयचूर्णं निःशेषतामानयंस्तदाऽऽत्मरक्षायै नगरपालागारं प्रत्यागच्छन्[14]), सिगरेट इत्यर्थे तमालपत्रगुटिकाशब्दप्रयोगः (यद्यहं शासिता स्यामहं तमालपत्रगुटिकासु मद्येषु च करं न्यस्येयम्[15]) । क्वचित्पुनस्तैर्नगराणां केषाञ्चन नामानि संस्कृतमूलकानीत्यवधार्य ध्वनिसाम्येन संस्कृत-रूपतामापादितानि । एवंविधेषु शब्देषु जूनागढ़कृते यवनगृह[16]शब्दो मुल्तानकृते मूलत्राण[17]शब्दः, सहारनपुर इत्यस्य कृते साधारणपुर[18]शब्दः, नवसारी इत्यस्य कृते नवश्री[19]शब्दः, कोलम्बो इत्यस्य कृते कोलाम्बु[20]शब्दः, बेलगाँव इत्यस्य कृते बिलग्राम[21]शब्दः सूरत इत्यस्य कृते सुरत[22]शब्दो विशेषोल्लेखमर्हन्ति । जर्मनीदेशस्य कृते शर्मण्य[23]शब्दस्तदभिजनेन सुप्रथितविदुषा मोक्षमूलरेणैव प्रयुक्तः । स एव च पितृचरणैरपि परिगृहीतः । एनि बसेण्ट

---

५. तदेव, पृ० १७
६. तदेव, पृ० ३७
७. ,, ,, १८
८. ,, ,, ३९
९. ,, ,, ६०
१०. ,, ,, ६०
११. ,, ,, ६१
१२. ,, ,, ६२
१३. ,, ,, ७५
१४. ,, ,, ७८
१५. ,, ,, १३०
१६. ,, ,, ३
१७. ,, ,, ९१
१८. ,, ,, ९१
१९. ,, ,, १३४
२०. ,, ,, १११
२१. ,, ,, १०३
२२. ,, ,, १३२
२३. ,, ,, ५७

इत्यस्या वैदेशिक्या विदुष्या नाम तैः संस्कृतीकृत्य वासन्तीदेवीत्येवं रूपेण प्रयुक्तम् —श्रीमत्या वासन्तीदेव्या अनर्गलं भाषणं श्रुत्वा।[२४] एवमेव अन्सारीति नामा वैद्योऽनुसारीत्येवंरूपेण तन्नामप्रतिसंस्कारेण निर्दिष्टः—ततोऽनुसारीत्यभिधोभिषङ् नारङ्गरसमानयत्।[२५] क्वचित्पुनः प्रचलितनाम्नां संस्कृतीकरणे परम्परापरित्यागोऽपि तैर्विहितः। तथा हि साबरमतीति नद्या नाम तैः शबरमती[२६]तिरूपेण संस्कृतरूपतामापादितम्। पुरातनेषु संस्कृताभिलेखेषु नदीयं साभ्रमतीतिरूपेण निर्दिष्टा। साबरमतीति तद्रूपस्यैवापभ्रंशः। सुरवाक्स्वारस्यानुरोधेनैव तैः ख्रिस्तीयानां धर्मग्रन्थो बाइबिलाख्यः ख्रिस्तवेद इत्येवंरूपेणाभिहितो मुहम्मदीयानां च मुहम्मदीयधर्मसंहितेति—ततो मुहम्मदीयधर्मसंहितायाः पाठादूर्ध्वं ख्रिस्तवेदोपनिषच्छ्रुतयश्च सस्वरमगीयन्त।[२७] परमहं ख्रिस्तवेदाक्षरानुसारिभिः ख्रिस्तानुगैस्साम्यमधिगन्तुं न प्रभवामि[२८]। ख्रिस्तधर्मानुसारिणस्तैः क्वचित् ख्रिस्तानुगा[२९] इति क्वचित् ख्रिस्तीया[३०] इत्येवंरूपेण क्वचिच्च क्रुश्चीना[३१] इत्येवं रूपेण निर्दिष्टाः। एवमेव मुसलमाना मुहम्मदीया[३२], मौहम्मदा[३३] मुसलमीना[३४]श्चेत्येवंरूपेणाभिहिताः। मुसलमानशब्दस्य मुसलमीनरूपेण परिणतौ तच्छब्दस्य कथञ्चित्संस्कृतरूपतापादनमेव तत्प्रयोजको हेतुः। जलियाँवाला बाग इत्यस्य कृते जह्लोद्यान[३५]शब्दप्रयोगेऽपि तादृश एव हेतुस्तद्धृदयगतः। क्वचित्क्वचित्पितृचरणैस्तेषां तेषामाङ्ग्ल शब्दानां कृते तद्भावबोधिनी शब्दावलिः प्रयुक्ता। तथा हि पेयिंग् गैस्ट इत्यस्याशयस्तैः स्वशब्दैरेवमाविष्कृतः—श्रीगान्धी लन्दननगर्यां क्वचिद् गेहे कुटुम्बाङ्गतया स्थितिमकुरुत[३६]। 'आक्शन' (नीलामी) इत्यस्याशयश्च शब्दैरेभिः—द्वितोलभरं लवणं सपादपञ्चशतेन रूप्यकैः श्रेष्ठिने रणछोडलालशोधनाय सघोषणं विक्रीतम्[३७]। 'डोमीनियन स्टेटस' इत्यस्याशयश्चैभिः शब्दैः—तत्र हि ब्रिटिशसाम्राज्येऽन्तः स्वराज्याधिगमो भरतवर्षोद्देशः[३८]। क्वचिदाधुनिको वाग्व्यवहारस्तैर्यथातथं परिगृह्य संस्कृतेनोपन्यस्तः। 'इतिहास के पन्नों में सोने के अक्षरों में लिखा जायेगा' इति हिन्द्यादिषु भाषासु

---

२४. तदेव, पृ० ५१
२५. तदेव, पृ० १००
२६. ,, ,, ४६, १३५
२७. ,, ,, १००
२८. ,, ,, १०४
२९. ,, ,, १०४
३०. ,, ,, १०१
३१. ,, ,, ४५
३२. ,, ,, १००
३३. ,, ,, १००
३४. ,, ,, ६१
३५. ,, ,, ६१
३६. ,, ,, ११
३७. ,, ,, १३७
३८. ,, ,, ११२

व्यवह्रियते। एतस्यैवोपन्यासस्तैः सुरभारत्यामित्थं विहितः—तदैतिह्यपत्रेषु कार्तस्वररसेन न्यस्ताक्षरं भविष्यति[३९]। अनेकत्र तैर्विशिष्टास्ते त आङ्ग्लशब्दास्तत्तत्संज्ञारूपा अपि संस्कृतेनानूदिताः। सोऽयमनुवादस्तेषां स्वोपज्ञ एव, संस्कृतवाङ्मयेऽन्यत्र तदनुपलम्भात्। 'रिकाल' इत्यस्यानुवादस्तैः प्रत्याह्वान पदेन कृतः—अतः श्रीगान्धी डायरस्य प्रत्याह्वानमैवैच्छत्।[४०] 'ओपन लैटर' इत्यस्यानुवादो निरावेष्टनं पत्रमिति पदेन कृतः—राजप्रतिनिधिमुद्दिश्य लिखिते निरावेष्टने पत्रे।[४१] 'यंग इण्डिया' इतिनामकं श्रीगान्धिना प्रवर्तितं वृत्तपत्रं तरुणभरतवर्षम् इति पदेन निर्दिष्टम्,[४२] 'कैसरे हिन्द' इति च भरतवर्षराज्यमिति पदेन—राज्यमन्त्रिणस्तस्मै भरतवर्षराज्यमिति नामिकां कीर्तिमुद्रां व्यतरन्।[४३] 'न्यू कासल् इति स्थानमभिनवसौधमिति[४४] शब्दैर्निर्दिष्टम्। क्वचिद् हिन्दुस्तानीभाषायामथवोर्दूभाषायामाङ्ग्लभाषायां वा प्रयुज्यमानाः शब्दास्तैस्तथा संस्कृतरूपतामापादिता यथा ध्वनिसाम्यमर्थसाम्यं च विच्छित्तिविशेषं कमप्यावहतः। 'पेशाब' इत्यस्य स्थाने प्रस्राव[४५] शब्दः, 'एडवोकेट' इत्यस्य स्थाने चोत्तरवादि[४६] शब्द एवञ्जातीयकावेव। पञ्चायत-स्थाने पञ्चायतन[४७] शब्दोऽपि तादृश एव। क्वचिच्छौचागारस्थाने स्वोपज्ञो विट्शरण[४८] शब्दस्तैः समाश्रितः। अनेकत्र संस्कृतभिन्नाः शब्दास्तैः संस्कृतविभक्तियोगेन व्यवहृताः—पोरबन्दर[४९] मिति ख्यातम्, श्रीजार्जे[५०] साम्राज्यनुराग, रुस्तमजिः[५१], श्रीमर्दूमेनो[५२]क्तम्।

संस्कृतवाङ्मयेऽधीतिनां तेषां कृते यत्र तत्र प्राचीनकृतिगतानां वाक्यानां वाक्यांशानां वा छाया यदि दृष्टिपथमवतरेत्तर्हि न तत्र किञ्चिच्चित्रम्। अधोनिर्दिष्टेषु वाक्येषुसा छाया स्पष्टमुन्मिषति—

(१) अयं महाभागः स्वहृदयानुमानेन तमपश्यत्[५३]। अत्र शाकुन्तलीयाया अनार्य! आत्मनो हृदयानुमानेन प्रेक्षसे (पञ्चमोऽङ्कः)—इति पङ्क्तेश्छाया।

---

| | | | |
|---|---|---|---|
| ३९. | तदेव, पृ० १८ | ४०. | तदेव, पृ० ६ |
| ४१. | ,, ,, ७८ | ४२. | ,, ,, ७९ |
| ४३. | ,, ,, ४५ | ४४. | ,, ,, ३७ |
| ४५. | ,, ,, २९ | ४६. | ,, ,, २४ |
| ४७. | ,, ,, ६९ | ४८. | ,, ,, २९ |
| ४९. | ,, ,, २ | ५०. | ,, ,, ६३ |
| ५१. | ,, ,, ३५ | ५२. | ,, ,, ३५ |
| ५३. | ,, ,, ५६ | | |

(२) आत्मना देहेन्द्रियवशीकारावाप्तये क्रियमाणमनशनं क्रमिके नृणां समुत्कर्षे साधकतमं करणम्[५४]।

(३) परमिदमभ्युपेयाः स्वातन्त्र्यावाप्तेः साधकतमं करणं प्रमाथो नेति[५५]।
अत्र साधकतमं करणमिति पाणिनिसूत्रमेवातिकौशलेन समायोजितम्।

(४) अहमत्रभवतो विज्ञापयेऽस्माभिः सर्वैः परमेश्वरो नो धियं प्रचोदयादिति प्रार्थनीयः[५६]।
अत्र धियो यो नः प्रचोदयादिति गायत्रीमन्त्रांशस्यच्छाया

(५) महात्मा स्वदेशजानां प्रणयं विहन्तुं नाशकत्[५७] अत्र रघुवंशीयस्य सम्बन्धिनो मे प्रणयं विहन्तुमिति (२/५८) पद्यांशस्यच्छाया।
यदि वयमात्मानं पाप्मभ्यो न पुनीमः[५८]

(६) अत्रोत्तररामचरितस्य 'पाप्मभ्यश्च पुनातु वर्धयतु च श्रेयांसि सेयं कथेति (७.२०) पद्यांशस्यच्छाया।

क्वचित्क्वचित्पितृरर्णविरलप्रयुक्ताः शब्दा अपि प्रयोगपदवीमापादिता यत्तेषां सुरगवीशब्दकोषपाटवमभिव्यनक्ति। श्रद्धावानित्यर्थे श्राद्ध[५९] शब्दः, क्षत्रियार्थे बाहुज[६०] शब्दो याचकार्थे वनीपक[६१] शब्दो वेषार्थं आकल्प[६२]शब्दो ऽल्पार्थे दभ्र[६३]शब्दोऽध्येत्रर्थे पठक[६४]शब्दो ग्रामार्थे संवसथ[६५] शब्दश्चेत्थंविधाः शब्दास्तैः प्रयुक्ताः। कदाचिदतिकठिनाऽपि पदावली तैः समाश्रिता यत्र विद्वांसोऽपि व्यामुह्येयुः। स्थालीपुलाकन्यायेनात्रैकमेवोदाहरणं प्रस्तुमः— कर्मणाऽसहचरितं प्रार्थनं प्रणिनददारकूटं वा निक्वणद् झल्लकं वा।[६६]

ग्रन्थप्रस्तावनारूपेणादौ दश पद्यानि तैः प्रस्तुतानि। प्रत्येकं पद्यस्यान्ते 'स वाचां विषयोऽस्ति न' इति पङ्क्तिस्तेषु विच्छित्तिविशेषमादधाति। अपूर्वः प्रवाहः पद्येषु तेषु सहृदयमनांसि बलादाकर्षति। सोऽयं प्रवाहो न केवलं

---

५४. तदेव, पृ० ८२
५५. तदेव, पृ० ११८
५६. ,, ,, ९३
५७. ,, ,, १०१
५८. ,, , १३४
५९. ,, ,, १
६०. ,, ,, २
६१. ,, ,, ५
६२. ,, ,, ११
६३. ,, ,, १३
६४. ,, ,, ९५
६५. ,, ,, १३१
६६. ,, ,, ९७

पद्येष्वेव गद्येऽपीति निर्मर्यं वचः। निदर्शनमत्राधः समुद्ध्रियमाणाः केचन सन्दर्भाः—

(१) एवं पुण्यशीलस्य श्रीकर्मचन्द्रस्य भार्यापि गुणैस्तस्य सदृशी बभूव ......समृद्धिमत्यपि सा विनीतवेषा। सम्भाविताऽप्यनुत्सिक्ता। उच्चैःशिरा अप्यधोदृष्टिः। कृशतनुरपि सा महासत्त्वा। नित्यं धर्मानुष्ठानेन वनीपकमनोरथप्रपूरणेन च सा स्वगृहं तीर्थतां निनाय।[६७]

(२) श्रीगान्धी खल्वनन्यसाधारणः पुण्यजनः। यतः स सन्दर्शनानि न पश्यति, श्रुतिप्रकाशश्चास्य नास्ति।.........अवदातं ह्यस्य निष्कापट्यम्। प्रशान्तमभ्रुकुटिमच्च नित्यमस्य ललाटपट्टम्। उत्सेकविविक्तं चास्य हृदयम्। एषो ह्यात्मनो मानुष्यं प्रतिपद्यते नर्षित्वम्। लोको मामृषिरिति व्यपदिशेदित्यपि स नेच्छति।[६८]

(३) नृणां श्रेष्ठो मुनिवृन्दारकवृन्दवन्द्यः स कारायां निरुद्धः कालं क्षपयति। तेन प्रवर्तितः साम्परायोऽद्याप्यनारतं प्रवर्तते। शतशोऽभिरूपाः सुकुमाराः कुमारा अनवद्यहृद्यरूपा व्युत्पत्तिमत्यः पतिवन्त्यः स्तनन्धयान्धाययन्त्यो जामयः श्रीमन्तोऽभिजनवन्तो ज्ञानवन्तः सहस्रशो युवानः स्थविराश्च सहर्षं कारानिरोधमलप्सतेति प्रतिहार्यमिव संवृत्तम्।[६९]

श्रीगान्धिचरितमिति वैयाकरणानामुत्सवः कोषकृतां रसायनं साहित्यरसरसिकानां रसाप्लावः स्वदेशानुरागिणां च स्फूर्तिसिन्धुः। तदिदं पुनरपि सहृदयकराङ्गुलिप्रणयितामासादयतीति परं परितोषमनुभवन् पूज्यानां प्रातःस्मरणीयानां यावज्जीवं शब्दब्रह्मोपास्यान्ते तत्रैव लीनानां दिगन्तविश्रान्तयशसां पितृचरणानां स्मरन् तेभ्यः सश्रद्धं प्रणामाञ्जलिं चार्पयन् विरमाम्यहं

२-१०-१९८९ सुरभारतीसमाराधनैकव्रतः

सत्यव्रतः शास्त्री

---

६७. तदेव, पृ० ५

६८. „ „ ७३-७४

६९. „ „ १४३-४.

# प्रास्ताविकम्

"देववाणी-परिषद्, दिल्ली" ति संस्थाया उद्देश्येषु सद्ग्रन्थप्रकाशनमप्यन्यतममस्ति। तदनुसारमद्यावधि परिषदा षष्टि (६०) संख्याका ग्रन्थाः प्रकाशिताः। इदानीञ्चैकषष्टितमग्रन्थरूपेण प्रो० चारुदेवशास्त्रिप्रणीतं 'श्रीगान्धिचरितं' प्रकाश्यते।

अथ श्रीगान्धिचरितकर्तारं श्रीगान्धिचरितञ्चावलम्ब्य किञ्चिल्लिख्यते।

महात्मनः श्रीगान्धिनश्चरितं विश्वस्य नैकैर्लेखकैर्विविधभाषासु, छायाचित्रकारैर्विविधच्छायाचित्रेषु, चित्रकलाविशारदैर्विविधचित्रेषु, मूर्तिकारैर्मूर्तिषु चलचित्रनिर्मातृभिर्विविधचलचित्रेषु, तत्तत्कलाकोविदैः कलाकारैश्च तत्तत्कलाकृतिषु स्वप्रतिभानुसारं चित्रितम्। प्रायः सर्वास्वेव भारतीयासु भाषासु तस्य युगप्रेरणादायकं चरित्रं लेखकैः स्वलेखनीविषयीकृतम्। १९६९ तमेशवीयेऽब्दे केन्द्रीय-हिन्दी-निदेशालयेन श्रीभवानीप्रसाद मिश्र-डा० प्रभाकर माचवे-महाभागयोः सम्पादकत्वे 'मृत्युंजयी'ति शीर्षकेण काव्य-संकलनं प्रकाशितं यत्र संस्कृत-असमिया-अंग्रेजी-उडिया-उर्दू-कन्नड-कश्मीरी-गुजराती-तमिल-तेलुगु-पंजाबी-बंगला-मराठी-मलयालम-सिन्धी-हिन्दी-भाषासु रचिताः अष्टाशीति (८८) संख्यकाः कविताः संकलिताः सन्ति। एवमेव केचनान्येऽपि ग्रन्थाः लभ्यन्ते यत्र महात्मगान्धिनो जीवनं दर्शनं चाधारीकृत्य लेखाः कविताश्च प्रकाशिताः सन्ति।

संस्कृतेऽपि महात्मानं गान्धिनमवलम्ब्य नैकानि गद्य-पद्यमयानि काव्यानि नाटकानि च विरचितानि येषु श्रीचारुदेवशास्त्रि-महाभागेन विरचितं 'श्रीगान्धिचरितम्' अनितरसाधारणं वैशिष्ट्यं बिभर्ति।

## श्रीगान्धिचरितकर्ता प्रो० चारुदेवः शास्त्री

श्रीचारुदेवशास्त्रिमहाभागः (८.५.१८९६—९.४.१९८७) संस्कृतस्याद्वितीयो विद्वान्, लब्धप्रतिष्ठो लेखकः, प्रभावी वक्ता ख्यातनामा परोपकारी चासीत्। पाणिनीयव्याकरणस्य तु स अगाधपाथोधिरेवासीत्। अत एव तन्मित्राणि प्रशंसकाश्च तमभिनवपाणिनिं व्यपदिशन्ति स्म। सदैव ज्ञानार्जने लीनः सन् शास्त्रिमहाभागः एकनवतिप्रायवर्षावस्थायामपि प्रत्यहं सप्ताष्टघण्टापर्यन्तं कार्यं करोति स्म। तस्य अविरतपरिश्रमः, कार्यक्षमता, नियतजीवनञ्च यूनां कृते

आदर्शतां यान्ति । तत्प्रणीताः विंशतिसंख्याका ग्रन्थाः, 'व्याकरणचन्द्रोदयः' इति 'उपसर्गार्थचन्द्रिका' चेति, पञ्चखण्डात्मिके द्वे ग्रन्थमाले अष्टादश शोध-निबन्धाश्च प्रकाशिताः सन्ति ।

श्री शास्त्रिमहाभागः पञ्चाम्बु-प्रदेशस्य 'होशियारपुर' जनपदान्तर्गते अहियापुराख्ये ग्रामे पितुः श्रीरामकृष्णात् जनन्यां श्रीमत्यां भागवन्तीदेव्यां ८-५-१८९६ ई० तारिकायां जनिं लेभे । तस्य प्राथमिकशिक्षा निकटस्थे 'टाँडा' ग्रामे 'एंग्लोवर्नाक्यूलर मिडिल-स्कूले' सम्पन्ना । परीक्षां समाप्य अयं जालन्धरे एस०डी०ए० एस० हाईस्कूले प्रवेशं लब्धवान् । तदनु लाहौरस्थे डी० ए० वी० कालेजे लब्धप्रवेशः सन् ततः एम० ए० परीक्षां प्रथमश्रेण्यां सर्वाधिकाङ्कलाभेन समुत्तीर्य स्वर्णपदकं प्राप्तवान् । इण्टरमीडियेट-बी०ए०-कक्षयोः विशेषयोग्यता-लाभादयं पंजाब-विश्वविद्यालयतः छात्रवृत्ति लेभे ।

१९२१तः श्रीशास्त्रिमहाभागेन जालन्धरस्थे डी० ए० वी० कालेज अध्यापनं प्रारब्धम् यद्यपि तदावधि तस्य एम० ए० कक्षायाः परीक्षाफलमपि नोद्घुष्टमासीत् । मासद्वयानन्तरं यदा परीक्षाफलमुद्घुष्टं तदास्य नियुक्तिः लाहौरस्थे डी० ए० वी० कालेजे संजाता यत्र हि असौ १९४७ ई० पर्यन्त-मध्यापयामास । देशविभाजनानन्तरं डी० ए० वी० कालेजे अम्बालानगरे पुनरुद्घाटिते सति १९४८ तः तेन पुनरपि तत्रैव अध्यापनं प्रारब्धम् । १९५१ तमेऽशवीयेऽब्दे पञ्चपञ्चाशद्वर्षावस्थायां स डी०ए०वी० कालेजसेवातोऽवकाशं प्राप्तवान् । तदनु किञ्चित्कालानन्तरं सोऽम्बालाकटके नवप्रारब्धे गान्धि-मैमोरियल-नैशनलकालेजे वर्षद्वयं यावदध्यापयामास । तदनु एकवर्षं यावत् दिल्लीस्थे पंजाब-विश्वविद्यालय कैम्पकालेजेऽध्यापितवान् ।

श्रीशास्त्रिमहाभागः संगीते प्रगाढां रुचिं निदधाति स्म । तेन कतिपय-वर्षैः, संगीतशास्त्रस्य नियताभ्यासः कृतः । कारयित्र्या भावयित्र्या च प्रतिभया समन्वितः स महात्मनो गान्धिनः जीवनचरितं १९३० तमेशवीऽयेब्दे 'श्रीगान्धि-चरितम्' इति ग्रन्थमाध्यमेन न्यग्रथ्नात् । अर्वाचीनसंस्कृतस्य अयं हि गद्यग्रन्थः श्रीशास्त्रिणो व्याकरणाधिकारस्य, लोकचेतनायाः बोधस्य देशभक्तेश्च सुतरां परिचायकः ।

श्रीशास्त्रिणः शोधकृतिषु सविशेषमुल्लेखनीये स्तः—'व्याकरणचन्द्रोदयः' इति 'उपसर्गार्थचन्द्रिका' चेति ग्रन्थमाले । पञ्चखण्डात्मिका व्याकरण-चन्द्रोदय-ग्रन्थमाला २३३२ पृष्ठेषु सम्पूर्णा । अस्याः प्रकाशनं १९६९ तः १९७३ पर्यन्तं संजातम् । उपसर्गार्थचन्द्रिका १२०० पृष्ठेषु प्रकाशिता ।

प्रो० शास्त्री भर्तृहरेः वाक्यपदीयस्य प्रथमकाण्डस्य सर्वप्रथमः परिष्कर्ता आसीत् । वाग्व्यवहारादर्शः, महाभारतवचनामृतं, श्रीमद्भागवतभाषापरिच्छेदः रामचरितामृतम्, नारदीयपुराणस्य भूमिका इत्यादयः अनेके महत्त्वपूर्णाः ग्रन्थाः श्रीशास्त्रिणः कीर्ति विस्तारयन्ति ।

प्रो० शास्त्रं संस्कृतसाहित्यस्य अपूर्वसेवार्थमनेकशो राष्ट्रीयसम्मानेन सत्कृतो जातः । १९६५ तमेशवीयेऽब्दे अखिलभारतीय-संस्कृत-साहित्य-सम्मेलनस्य स्वर्णजयन्त्यवसरे तत्कालीनभारतराष्ट्रपतिना डा० राधाकृष्णन्-महाभागेन श्रीशास्त्री 'विद्यावाचस्पति' उपाधिना सम्मानितः । १९७१ तमेशवीयेऽब्दे अयं राष्ट्रपतिसम्मानपत्रेण सत्कृतो जातः । १९७३ तमेऽब्दे अस्य हीरकजयन्तीमुपलक्ष्य खण्डद्वयात्मकः एकसहस्रपृष्ठात्मकश्च अभिनन्दनग्रन्थः प्राकाश्यत यो हि ११ जनवरी १९७३ तारिकायामेकस्मिन् विशेषसमारोहे तत्कालीनलोकसभाध्यक्षेण श्रीगुरदयालसिंहढिल्लोमहाभागेन अस्मै समर्पितः । २५-१०-१९८२ तारिकायां काशीहिन्दूविश्वविद्यालयेन अयं डी० लिट्० सम्मानोपाधिना सम्मानितः । १९८२ तमेशवीयेऽब्दे एव उत्तरप्रदेश-संस्कृत-अकादमी संस्कृत-साहित्यसर्जनार्थम् अस्मै पञ्चदशसहस्ररूप्यकात्मकं पुरस्कारं समर्पितवती । २७-३-१९८३ तारिकायां पंजाबसर्वकारस्य भाषाविभागेन श्रीशास्त्री 'शिरोमणिसाहित्यकार' सम्मानेन ५१०० रूप्यकात्मकपुरस्कारेण स्वर्णपदकेन च सभाजितः । श्रीशास्त्री संस्कृतमतिरिच्य गुजराती-मराठी-जर्मन-रूसी- फ़्रेंच-प्रभृतिभाषास्वपि नैपुण्यं दधार ।

अधीतिबोधाचरणप्रचारैः सारस्वतं व्रतं सम्यक् पालयतो ज्ञानमूर्तेः ऋषिकल्पस्य प्रो चारुदेवशास्त्रिमहाभागस्य द्वे अपत्ये स्तः—एकः पुत्रः डा०सत्यव्रतः शास्त्री, एका च पुत्री श्रीमती उषा । डा० सत्यव्रतशास्त्रिमहाभागः स्वपितुः न केवलं पुत्र एवापि तु योग्यः शिष्योऽपि । दिल्ली-विश्वविद्यालयस्य संस्कृत-विभागे आचार्योऽसौ महानुभावः विश्वस्मिन्नपि जगति संस्कृत-विद्वत्कविरूपेण लब्धप्रतिष्ठो विराजते ।

२२-१-१९७८ ई० तारिकायां 'देववाणी-परिषद् दिल्ली' संस्थायाः प्रथम-वार्षिकाधिवेशनस्योद्घाटनं कुर्वद्भिः श्रीचारुदेवशास्त्रि-महाभागैः संस्कृतस्य प्रचारार्थं सङ्कीर्णवृत्तेस्त्याग उदारमार्गस्याङ्गीकारश्च वरणीयत्वेन प्रतिपादितावास्ताम् । तेषामयं सन्देशोऽद्यापि प्रासङ्गिकतां दधाति ।

९-४-१९८७ तारिकायां अपराह्णे ३.३४ वादनकाले दिल्यां ज्ञानमूर्तिः प्रो० चारुदेवशास्त्रिमहाभागः हृदयगत्यवरोधात् स्वीयामैहिकयात्रामुपसंहृतवान् ।

## श्रीगान्धिचरित-वैशिष्ट्यम्

श्रीचारुदेवशास्त्रिप्रणीतस्य 'श्रीगान्धिचरितस्य' वैशिष्ट्यप्रकाशनात्पूर्वं प्रसक्तानुप्रसक्त्या महात्मगान्धिपरकाणां प्रमुखसंस्कृतरचनानां परिचयोऽस्माभिः प्राप्तव्यः । १९३१ तमेशवीयेऽब्दे पण्डितया क्षमारावमहाभागया १८ अध्यायेषु, ६५९ श्लोकैः 'सत्याग्रहगीता' प्रणीता यस्याः प्रकाशनं १९३२ तमेशवीयेऽब्दे सञ्जातम् । अस्यां कृतौ १९३० तमं वर्षं यावन्महात्मनो जीवने घटितानां घटनानामाकलनं लेखिकया कृतम् । श्रीश्रीनिवासताडपत्रीकरमहाभागेन १९३२ तमेशवीयेऽब्दे 'गान्धीगीता' प्रणीता । अस्यां १९३२ तमवर्षाभिव्यापिघटना वर्णिता आसन् । यदा च १९४९ तमेशवीयेऽब्दे अस्या प्रकाशनं बभूव तदा लेखकेन १९३३-१९४८ वर्षाभिव्यापिनीनां घटनानामपि अत्र समावेशः कृतः । पण्डितया क्षमारावमहाभागया १९४४ तमेशवीयेऽब्दे 'उत्तरसत्याग्रहगीता' रचिता यत्र तया महात्मनो जीवनस्य १९३१-१९४४ तमवर्षाभिव्यापिनीनां घटनानां चित्रणं कृतम् । 'उत्तरसत्यग्रहगीता' १९४८ तमेऽब्दे प्राकाश्यं नीताभूत् । क्षमारावपण्डितया १९४९ तमेशवीयेऽब्दे 'स्वराज्यविजयः'प्राणायि यस्य प्रकाशनं १९६२ तमेऽब्दे सञ्जातम् । श्रीमथुराप्रसाददीक्षितमहाभागेन 'गान्धि-विजयनाटकम्' लिखितम् । स्वामिश्रीभगवदाचार्येण ७५ सर्गेषु ५,५११ श्लोकेषु च 'श्रीमहात्मगान्धिचरितम्' प्रणीतम् । अस्य महाकाव्यस्य त्रयः खण्डाः सन्ति—१. भारतपारिजातम्, २. पारिजातापहारः तथा ३, पारिजात-सौरभम् इति । कविनास्य महाकाव्यस्य रचना १९५१ तमेशवीयेऽब्दे सम्पूरिता, तस्मिन्नेव वर्षे चास्य प्रकाशनमनुष्ठितम् । १९५२ तमेशवीयेऽब्दे 'विश्व-संस्कृतम्' इत्याख्ये त्रैमासिकपत्रे श्रीविश्वनाथकेशवछत्रे-महाभागस्य 'अपूर्वः शान्तिसंग्रामः' प्रकाशितोऽभूत् यस्य कथानकं श्रीगान्धिनो दाण्डी-यात्रां परितो भ्रमति । अस्मत्पूज्यजनकेन श्रीब्रह्मानन्दशुक्लमहाभागेन 'श्रीगान्धिचरितम्' नाम खण्डकाव्यं प्रणीतं यस्य प्रकाशनं १९६० तमेशवीयेऽब्दे संवृत्तम् । कविना अस्मिन् १११ पद्यात्मके काव्ये महात्मनः सम्पूर्णं जीवनचरितं संक्षेपतो वर्णितम् ।

१९५९ तमेशवीयेऽब्दे पं० जयरामशास्त्रिमहाभागेन प्रणीतं 'श्रीगान्धि-बान्धवम्' प्रकाशितं जातम् । श्रीयतीन्द्रविमलचौधुरीमहाभागेन 'भारतजनकम्' नाम षोडषांकं नाटकं प्रणीतम् । आचार्य डा० रमेशचन्द्रशुक्लमहाभागेन १२५ पद्यात्मकं 'गान्धिगौरवम्' नाम काव्यं १९६९ तमेशवीयेऽब्दे रचितं यस्य प्रकाशनं तस्मिन्नेव वर्षे समपद्यत । श्रीयज्ञेश्वरशास्त्रिमहाभागेन १९६९ तमेश-वीयेऽब्दे 'भारतराष्ट्ररत्नम्' नाम काव्यं प्रणीतं यस्य पञ्चमी कविता 'राष्ट्रपिता महात्मा गान्धी'इत्यस्ति । अस्य प्रथमं प्रकाशनं १९७३ तमेऽब्दे सञ्जातम् ।

श्रीशिवगोविन्दत्रिपाठिमहाभागेन २.१०.१९६९—२२.२.१९७० तारिकान्तराले 'अष्टसर्गात्मकं ६८० श्लोकात्मकं च काव्यं रचितम्, यस्य द्वितीयं संस्करणं १९७७ तमेशवीयेऽब्दे संवृत्तम्। डा० बोम्मकण्टिरामलिङ्गशास्त्रिमहाभागेन सत्याग्रहोदयम्' रूपकं १९६९ तमेशवीयेऽब्दे प्रकाशितम्। डा० चिन्तामणि-द्वारकानाथ देशमुख-महाभागेन 'गान्धिसूक्तिमुक्तावली' प्रणीता। पण्डित-रघुनाथप्रसादचतुर्वेद-महाभागेन 'गान्धिगरिमकाव्यम्' प्रणीतम्।

डा० किशोरनाथ झा महाभागेन 'बापू' इति शीर्षको ग्रन्थः संस्कृतभाषाया-मनूदितः। अस्य प्रकाशनं १९७३ तमेशवीयेऽब्दे जातम्। श्रीमुतुकुलम् श्रीधर-महाभागेन अष्टादशसर्गात्मकं १२८२ पद्यात्मकं च 'नवभारतम्' नाम महाकाव्यं प्रकाशितं यस्य ६-७ सर्गेषु महात्मगान्धिनश्चर्चा विहिता। एवमेव श्री के०वी० एल० शास्त्रि-महाभागेन 'महात्मविजयम्' श्री वी० नारायणनायरमहाभागेन 'महात्मनिर्वाणम्', पं० साधुशरणमिश्रमहाभागेन 'श्रीमद्गान्धिचरितम्' श्री सी० पाण्डुरंगशर्ममहाभागेन 'सत्याग्रहकथा', पं० लोकनाथशास्त्रिमहाभागेन 'गान्धिविजयं' श्रीविद्यानिधिशास्त्रिमहाभागेन च 'श्रीगान्धिचरितम्' विरच्य महात्मनश्चरितमुपवर्णितम्। सद्य एव (१९८९ तमेशवीयेऽब्दे) 'देववाणी-परिषद्, दिल्ली' ति संस्थया श्रीशिवकुमारमिश्रप्रणीता 'गान्धिसूक्तिसप्तशती' प्रकाशिता यस्यां महात्मनो विचाराः संस्कृतपद्यमाध्यमेन प्रस्तुताः। एवमेव अन्या अपि काश्चन रचनाः स्युर्या महात्मगान्धिनमवलम्ब्य प्रणीताः स्युः।

उपर्युक्तरचनानां सर्वेक्षणेनेदं सुतरां ज्ञायते यत् श्रीचारुदेवशास्त्रि-महाभागस्य 'श्रीगान्धिचरितम्' इदम्प्रथमतया संस्कृतेनोपनिबद्धो गद्यप्रबन्धो-ऽस्ति। अस्य प्रकाशनं १९३० तमेशवीयेऽब्दे संवृत्तम्। इतः पूर्वं महात्मगान्धिन मवलम्ब्य संस्कृतभाषायां कोऽपि ग्रन्थः किमपि काव्यं नाटकं वा स्वतन्त्ररूपेण न प्रकाशितं बभूव। अतोऽद्यावधि उपलब्धप्रमाणानुसारं 'श्रीगान्धिचरितम्' एव सर्वासां रचनानामाद्या गद्यकृतिः सिद्ध्यति।

'श्रीगान्धिचरित'-रचनाया लेखकेन एकतो महात्मनो गान्धिनश्चरितं वर्णितम् अपरतश्च गीर्वाणवाण्याः सततजागरूकत्वं प्रख्यापितम्। स लिखति—"इदानीमस्मिन्सर्वस्मिन्भूवलये नृणां श्रेष्ठ इति मतस्य कोटिशो जनानां वन्द्यस्य परोपकरणीकृतकायस्य सविग्रहस्येव धर्मस्य महामहिम्नः श्रीगान्धिनश्चरितस्य गीर्वाणवाण्या निबन्धने नोत्तिष्ठन्ते सूरय इति, मृतकल्पा विबुधभारतीति केषाञ्चिदुक्तिश्चरितार्थतां मा गमदिति च, विशुद्धाऽक्षुण्णा चात्रभवतो विचार-सरणिश्चरितोत्कर्षश्च सर्वस्य संस्कृतज्ञस्य विदितो स्यातामिति चाहमात्मानम-पर्याप्तमपि मन्यमानोऽत्र कर्मणि प्रावृतम्।" (भूमिका)

लेखकेन 'श्रीगान्धिचरिते' आद्यन्तमतिशयोक्ति परिहरता ऐतिहासिकता अक्षुण्णतया परिपालिता। लेखकः कथानायकस्य महात्मगान्धिनः समकालीन आसीत्। तेन वृत्तपत्रेषु दैनिकसमाचाराः अवश्यं पठिताः स्युः। दिसम्बरमासे लवपुरे (लाहौरनगरे) निवसता तेन तत्र १६२६ तमेशवीयेऽब्दे समायोजितम् अखिलभारतीयकांग्रेससंस्थाया अधिवेशनमप्यवश्यं कर्णाकर्णिकया श्रुतं साक्षाद् दृष्टं वा भवेत् यत्र पूर्णस्वराज्यप्रस्तावः स्वीकृतोऽभूत्। तेन भारतीय स्वातन्त्र्य-संग्रामस्य निकटतो दर्शनमवश्यं कृतं भवेत्। अतो महात्मनो गुणैराकृष्टेन तेन सः कथानायकत्वेन वृतः। लेखकेन महात्मगान्धिनो विषये यताप्रमाणिकं श्रुतं, पठितं, दृष्टमनुभूतं वा तत्परिष्कृतसंस्कृतभाषया स्वकृतावुपस्थापितम्। क्वचिदपीतिहासविरुद्धता नावलोक्यते। १६३० तमेशवीयाब्दं यावद् घटिता घटना अत्र निरूपिताः। इतिहाससम्मतता मुख्यतो वैक्रमसंवत्सरपञ्चाङ्गानुसारं मासतिथिवासरोल्लेखेन पालिता। तद्यथा—

(१) पञ्चविंशत्युत्तरनवशतोत्तरसहस्रतमे विक्रमवत्सरे कार्तिके मासि मङ्गल्यायां कृष्णप्रथमायां पुण्ये पोरबन्दरपुरे कथापुरुषो महात्मा······ अजायत। (पृ० ६)

(२) पञ्चचत्वारिंशदुत्तरनवशतोत्तरसहस्रतमे वत्सरे भाद्रपदे मासि श्रीगान्धी ······आङ्गलदेशराजधानीं लन्दनाख्यामवापत् (पृ० ६)

(३) सप्तचत्वारिंशदुत्तरनवशतोत्तरसहस्रतमे वैक्रमेऽब्दे दक्षिणाफ्रीकाभूखण्डे पञ्चदशलक्षप्राया भरतवर्षीया न्यवसन्।···श्रीमोहनदासः पञ्चाशदुत्तर नवशतोत्तरसहस्रतमे संवत्सरे दक्षिणाफ्रीकाभूखण्डमापद्यत। (पृ० १६-१७)

(४) श्रीगान्धी·····अष्टपञ्चाशदुत्तरनवशतोत्तरसहस्रतमे वत्सरे सहस्ये मासि कलिकातानगर्यां मिलितायां काङ्ग्रेसपर्षद्युपास्थित। (पृ० २१)

(५) द्वासप्तत्युत्तरनवशतोत्तरसहस्रतमे वैक्रमे वत्सरे श्रीगान्धी मुम्बापुर्यां पोतादवातरत्।······चैत्रे मासि तत्रभवान् मद्रापुरीमगमत् (पृ० ४५)

एवमेव १६, २२, २४, ३०, ३१, ३२, ५०, ५३, ५५, ६०, ६४, ६५, ६६, ६७, ७०, ७१, ७३, ७४, ७५, ७७, ७८, ७६, ८०, ८३, ८४, ६०, ६३, ६४, ६८, १००, १०१, १०५, १०६, १०७, ११०, १११, ११३, ११४, ११५, ११६, १२१, १२५, १२६, १२७, १२८, १३१, १३२, १३३, १३६, १३६ प्रभृतिपृष्ठेषु वैक्रमसंवत्सर-पञ्चाङ्गानुसारितिथिमासनिर्देशो लभ्यते। क्वचित् ख्रिस्तीयतिथिपत्रानुसार-मपि वर्षमासतिथिनिर्देशो लभ्यते, यथा—

(१) अखिलभारतीया काङ्ग्रेसपरिषद् एकोनत्रिंशदुत्तरनवशतोत्तरसहस्रमिते ख्रिस्ताब्देऽन्त्ये मास्यन्त्येषु दिवसेषु पञ्चापराजधान्यां लवपुरे मिलिता । ......एकत्रिंशेऽह्न्यानिशीथं परःसहस्राः समवेता जना अजागरुः । ......यावदेव द्वादशनादमिता क्षणदात्यगाद् आगाच्च नवो वत्सरस्तावदेव निरवर्तत संख्यानं पूर्णस्वराज्यप्रस्तावश्चोररीकृत इति प्राख्याप्यत । (पृ० ११५)

एवमेव १०४, ११३, १२३ पृष्ठेष्वलोकनीयम् ।

किन्तु 'श्रीगान्धिचरितं' केवलमितिहासग्रन्थ एव नास्ति । तत्र काव्यत्वमप्यस्ति । तत् 'आख्यायिका'-कोट्यां 'गद्यप्रबन्ध' कोट्यां वा अन्तर्भवितुमर्हति । अत्रैतिहासिकी कथा ; विशिष्टो विश्वविश्रुतः सत्याहिंसाश्रमनिर्भयतादिसद्गुणसंघातो गान्धिश्च नायकः—

महात्मेति समाख्यानं यस्येह विदितं भुवि ।
लोकोत्तरं च चारित्रं स वाचां विषयोऽस्ति नः ।। (पृ० १)

यथावसरमलंकारा अपि दृश्यन्ते, यथा—

१. एतज्ज्ञात्वा स पादमूलमुपसर्पतो दिदङ्क्षतो दन्दशूकादिव ततो भोजनादुद्विजत । (पृ० १०)
२. यूनः श्रीगान्धिनो हृदयमयोधातुरिवायस्कान्तशकलेन हारिण्या पश्चिमया सभ्यतया समाकृष्टम् (पृ० ११) ।
३. मृगतृष्णिकाया इवास्या अनुसरणमपार्थकमजानात् । (पृ० १२)
४. दुःखशीलः पुरातनो ब्रह्मचारीव स यमान् नियमांश्च सततं सेवमानः कालमनयत् । (पृ० १२)

अत्र सर्वत्र उपमायाश्चमत्कारोऽवलोक्यते । सुभाषितान्यपि यथास्थानं लब्धुं शक्यन्ते, यथा—

१. अहं च विद्यार्थी । अतोऽहमनन्यमना विद्यामुपाददीय । (पृ० १२)
२. पेलवधियो बाला यथा बोध्यन्ते तथा गृह्णन्ति । (पृ० २०)
३. सत्याग्रहसरणिः प्रणयसरणिरिव हुताशं मध्यतो याति (पृ० १३१)
४. सुविचिन्त्य कार्यं प्रारम्भणीयम् । परं प्रारभ्य न विरमणीयम् (पृ० १३१)
६. सत्याग्रहिणः किमपि गोप्यं नास्ति । (पृ० १३२)
६. आत्मसंमानं गोपायितुं चरितोत्कर्षं चोपपादयितुं सत्याग्रहादृते नास्ति साधनान्तरम् । (पृ० २५)

श्रीगान्धिचरितकारस्य भाषा तस्य व्याकरणपाण्डित्यं सुतरां पिशुनयति । पाणिनीयव्याकरणपरिष्कृता तस्य भाषा सन्धि-सुबन्त-तिङन्त-कृदन्त-तद्धित-

समासादिनियमानां परिचयं दातुं सम्यक् समर्था। तिङन्तरूपाणां त्वियं मञ्जूषैव विद्यते। प्रायः सर्वेष्वेव लकारेषु धातुरूपाणि अस्यां निहितानि। अध्येतृभ्यः पाणिनीयप्रबोधं स्वदेशोद्धारभावनां च युगपद् दातुं समर्थेयं कृतिः।

श्रीगान्धिचरितकारस्य भाषाधिकारो वाक्ययोजनया सुतरां साक्षात्कर्तुं शक्यते। भावानुसारं तस्य भाषा प्रवहति। यद्यपि क्वचित्पण्डितैरेवावगन्तव्या शब्दा दृश्यन्ते तथापि प्रायः सर्वत्र सुकुमारमतिभिरपि झटिति ग्राह्या प्रसादगुणोपेता पदावली अवलोक्यते। महात्मनो दाण्डीप्रस्थानवर्णनस्य सजीवतां पश्यन्तु सहृदयाः—

"वन्दे मातरमिति घोषणायां क्रियमाणायां वेगितया स्थिरया च गत्या स प्रागात्। स तथोत्साहवत्त्वरितं चाचलद्यथा यात्रामनुयान्तः परःशता जनाश्चलितेन सह गन्तुं नाशकन्। एकया होरया क्रोशादधिकोऽध्वाऽत्य-क्रान्तः।" (पृ० १३०)

श्रीगान्धिचरिते महात्मनो जन्मप्रभृति दाण्डीप्रयाणान्तरम् आसेधं याव-ज्जीवनचरितमुपश्लोकितं ग्रन्थकृता। अयमासेधः ५.५.१९३० ई० तारिकायां कराडीतिस्थानेऽभवत् यतः स यरवदाकारागारं प्रापितोऽभूत्। ग्रन्थसमाप्ति-कालः मईमासतः उपसप्तमासानन्तरं १९३० तमे दिसम्बरमासे सिद्ध्यति। तस्मिन् काले भारतस्य या मनःस्थितिरासीत्तस्याः सजीवं वर्णनं ग्रन्थकर्ताऽत्र कृतम्। १९३० तमेशवीयेऽब्दे प्रयुक्तां तस्य वाचमनुधावितुमर्थो विवशो जातः १९४७ तमेशवीयेऽब्दे, यदा भारतं स्वतन्त्रं जातम्। इयमस्ति साऽऽस्थामहिता वाक्:—

"बन्दिग्राहं गृहीतस्य श्रीगान्धिनोऽद्योपसप्ताः मासाः। नृणां श्रेष्ठो मुनि-वृन्दारकवृन्दवन्द्यः स कारायां निरुद्धः कालं क्षपयति। तेन प्रवर्तितः सांपरायो-ऽद्याप्यनारतं प्रवर्तते। षष्टिसहस्रं योद्धारश्च बद्धाः। ......सत्यमेव जयते नानृतम्, यतो धर्मस्ततो जय इत्यनाशङ्क्ये श्रुतिस्मृती ब्रूतः। यदि श्रौती स्मृत्युदिता वा वाग् विलुप्तार्था न भवति यथा नः प्रत्ययस्तदा ध्रुवं महात्मा जेष्यति ध्रुवं च भारतं वर्षं स्वातन्त्र्यमाप्स्यतीति।" (पृ० १४४)

एवं श्रीगान्धिचरितम् एकतो गान्धिपरकरचनासु आद्यतया, ऐतिहासिक-तया, पाणिनीयव्याकरणसम्मततया रचनासौष्ठवेन च महत्त्व बिभर्ति अपरतश्च स्वातन्त्र्यप्राप्तेः पूर्वघोषणां करोति। ग्रन्थान्तरैस्साकमस्य तुलना रोचकविषयः स्यात्।

**प्रस्तुतं संस्करणम् :**

श्रीगान्धिचरितस्य प्रथमं संस्करणं ग्रन्थकर्ता १९८७ मिते वैक्रमे संवत्सरे मार्गशीर्षमासे शुक्लपक्षे सप्तम्यां तिथौ गुरुवासरे (४.१२ १९३०ई०तारिकायां)

लवपुरतः प्रकाशितं चकार। विगतेभ्यः कतिपयेभ्यो वर्षेभ्य इदं दुष्प्राप्यतां गतम्। प्रो० चारुदेवशास्त्रिणां ६.४.१९८७ ई० तारिकायां दिवंगमने देववाणी-परिषदा श्रद्धाञ्जलि-सभायोजिता। देववाणी-परिषदा साकं तेषां घनिष्ठः सम्बन्ध आसीत् २२-१.१९७८ ई० तारिकायां तैः परिषदः प्रथमं वार्षिकाधिवेशनं समुद्घाटितमासीदिति कृत्वा तेषां कृते: पुनः प्रकाशनं तेभ्यो वास्तविकः सारस्वतश्रद्धाञ्जलिर्भविष्यतीति मन्यमानेयं परिषत् 'श्रीगान्धिचरितं' पुनः प्रकाशयितुं प्रस्तुताभूत्। ग्रन्थकर्तुरात्मजेन प्रो० सत्यव्रतशास्त्रिमहाभागेनायं विचारोऽनुमोदितः। तदनु १९८७ तमेशवीयेऽब्दे देववाणी-परिषदः 'अर्वाचीनसंस्कृतम्' इतिनामधेये त्रैमासिकपत्रे इदं प्रकाशितं जातम्। इदानीञ्च पृथक् पुस्तकाकारेण प्रकाश्यते। प्रो० सत्यव्रतशास्त्रिमहाभागेनानिव्यस्तेनापि ग्रन्थमवलम्ब्य स्वविचारान् अभिव्यक्तुमस्माकमनुरोधो रक्षित इत्यस्मै महानुभावाय हार्दिकान् धन्यवादान् व्याव्याहरामि। कृपालवः पाठकाः शुद्धाशुद्धपत्रिकानुसारं पाठसंशोधनाय सादरं प्रार्थ्यन्ते। १३५ संख्यकपृष्ठे टिप्पण्यां ग्रन्थमुद्रणकाले 'दासे कृतागसी'ति पद्यपंक्तेः प्रसिद्धं पाठांतरं मुद्रपितमासीत् किन्तु शुद्धिपत्रे लेखकेन मूलग्रन्थे स्वीकृत एव पाठो दीयते।

पुनश्च प्रथमसंस्करणस्य विषयविशेषानुक्रमे वंशवर्णनत आसेधपर्यन्तमुपशीर्षकाणां संख्या ४० इत्यासीत्। संवादत्रापि विद्यते किन्त्वत्र क ख गक्रमेण तानि १९ संख्यकानि उपशीर्षकाण्यपि समावेशितानि यानि ग्रन्थान्तस्तु मुद्रितान्यासन् किन्तु कथञ्चित् विषयविशेषानुक्रमे स्थानं लब्धुं नाशकन्।

अस्य संस्करणस्य प्रकाशनावसरेऽहं स्वर्गतानां प्रो० चारुदेवशास्त्रिमहाभागानां पुण्यस्मरणं करोमि येषां बहुमुखिपाण्डित्येन संस्कृतजगदलंकृतं तिष्ठति।

राष्ट्रपितुः महात्मगान्धिनः १२०
तमा जयन्ती २-१०-१९८९
आर ६ वाणी-विहारः,
नयी दिल्ली-११००५९

(हस्ताक्षर) रमाकान्त शुक्लः

(डा० रमाकान्त शुक्लः)
महासचिवः, देववाणी-परिषद्, दिल्ली

# भूमिका

साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम् ॥

(श्रीबाणभट्टः)

तथ्यं मार्गतां हेयोपादेये विविदिषूणां सन्मार्गमाचिचरिषूणां जनानां शास्त्रश्रवणं न तथोपकारकं यथा भुवनभावुकाय जनिजुषां भव्यानामलोकसामान्यगुणानां महात्मनां चरितामृतरसास्वाद इत्यविसंवादी वादः । निसर्गत एव च देहभृत एवंविधानां नरर्षभाणां चरितश्रवणकुतुकिनः । अस्यैव हेतोः प्रतिभातसकलपदार्थाः प्राचेतसादयः पुराणा मुनयः, प्रथितयशसः कालिदासप्रमुखाः कवयितारश्च पावनानि रामादीनां चरितानि निबबन्धुः ।

इदानीमस्मिन्सर्वस्मिन्भूवलये नृणां श्रेष्ठ इति मतस्य कोटिशो जनानां वन्द्यस्य परोपकरणीकृतकायस्य सविग्रहस्येव धर्मस्य महामहिम्नः श्रीगान्धिनश्चरितस्य गीर्वाणवाण्या निबन्धने नोत्तिष्ठन्ते सूरय इति, मृतकल्पा विबुधभारतीति केषाञ्चिदुक्तिश्चरितार्थतां मा गमदिति च, विशुद्धा ऽक्षुण्णा चात्रभवतो विचारसरणिश्चरितोत्कर्षश्च सर्वस्य संस्कृतज्ञस्य विदितौ स्यातामिति चाहमात्मानमपर्याप्तमपि मन्यमानोऽत्र कर्मणि प्रावृतम् । यदीदं प्रागल्भ्यमिदं मे मृष्यताम् ।

अहमत्र सन्दर्भे प्रसादो मधुरिमा च स्यातामित्यादृषि । महात्मनो भाषितानि भाषान्तरनिबन्धाश्चेह तथा संस्कृतेन परिवर्त्य विन्यस्ता यथा सत्यपि संभवत्साम्ये भाषान्तरपरिवृत्तिरियमिति बुद्धिरेव नोदियात् । इदमेवं विपरीतं वेति दोषज्ञा विमृशन्तु ।

सदसद्विवेचनचणा विविधविद्याकृतावगाहाः पण्डितप्रवरा इमं प्रबन्धं गुणदोषतः परिच्छिन्दन्तु मां चानुगृह्णन्त्विति प्रार्थ्यते ।

लवपुरे<br>
१९८७ मिते वत्सरे मार्गे<br>
सितसप्तम्यां गुरुवासरे

विदुषां वशंवदः<br>
चारुदेवशास्त्री

# शुद्धाशुद्धपत्रिका

[ग्रन्थमुद्रणकाले सावधानतायामपि मुद्रकानवधानात् यन्त्रवशाद्वा जातानां मुद्रणदोषाणां परिमार्जनार्थं शुद्धिपत्रं प्रदीयते। कृपालवः पाठकाः ग्रन्थपठनात् पूर्वं पाठं संशोधयितुं प्रार्थ्यन्ते।]

| पृष्ठे | पंक्त्याम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १० | सोन्ऽतरा अन्तरा | सोऽन्तराऽन्तरा |
| ५ | ८ | गुणै तस्य | गुणैस्तस्य |
| ७ | ६ | माणकद्वयं दण्डयत् | माणकद्वयमदण्डयत् |
| १० | ७ | जनेः परिगतः | जनैः परिगतः |
| | ११ | सम्भ्रान्तमनः | सम्भ्रान्तमनाः |
| | १६ (पा०टि०) | अत्र तुं | अत्र तु |
| | २१ ( „ ) | इत्योपसंख्यानिकी | इत्योपसंख्यानिकी |
| १२ | १३ | पाञ्चाशता | पञ्चाशता |
| १२ | १४ | संविधामकल्पयत् | संविधामकल्पयत्। स महाभाटकमागारं यक्त्वऽपरञ्चाल्पभाटकम० गृहणात्। अधिश्रयणीं क्रीत्वा |
| १६ | १४ | पञ्चाशदुत्तरनवशतोत्तर-ग्रीका-भखण्डमापद्यत। | पञ्चाशदुत्तरनवशतोत्तरसहस्रतमे संवत्सरे दक्षिणाग्रीकाभूखण्डमापद्यत। |
| १७ | ४ | सोऽधिकृतैगौराङ्गं | सोऽधिकृतैर्गौराङ्गं··· |
| २२ | ६ | संमार्जनप्रोक्षाणदेरभावात् | संमार्जनप्रोक्षणादेरभावात् |
| २५ | १७ | यद्येतद्विधानानविधायित्व | यद्येतद्विधानानुविधायित्व |
| ३३ | २१ (पा०टि०) | द्विकर्मकत्वप्रतिपद्यमानेन | द्विकर्मकत्वं प्रतिपद्यमानेन |
| ३५ | ४ | अिभनववयास्त्वं | अभिनववयास्त्वं |
| ३६ | ६ | प्रचोदयन् | प्राचोदयन् |
| ३८ | ५ | पञ्चचत्वर्रिशद्रूप्यात्मकः | पञ्चचत्वारिंशद्रूप्यात्मकः |

| | | | |
|---|---|---|---|
| ४९ | १६ | बोद्धव्या: | बोद्धव्या |
| ५१ | १३ | परिक्षेय | परीक्षेय |
| ५३ | ११ | विस्पदटं | विस्पष्टं |
| ५६ | १२ | स्वोद्देशमभिवत्स्यमि | स्वोद्देशमभिवत्स्यामि[२] |
| ५६ | १५ | कर्तुमुद्यच्छ[२] | कर्तुमुद्यच्छ[३] |
| ५८ | ७ | प्राख्यायन् | प्राख्यापयन् |
| ३ | १६ | सितषष्ट्यां | सितषष्ठ्यां |
| ६४ | ५ | तदध्यतिष्टत् | तदध्यतिष्ठत् |
| ६४ | २४ (पा०टि०) | रूढियोगापहारिणीति | रूढियोग/पहारिणीति |
| ६९ | २३ ( ,, ) | गृह्यकोयऽसौ | गृह्यकोऽप्यसो |
| ७१ | २६ ( ,, ) | इति इति शाकुन्तले | इति शाकुन्तले |
| ७५ | २५ (पा०टि०) | स्यादवन्ध्य | स्यादवन्ध्य: |
| ७७ | १९ | ···मकुर्धन् | ···मकुर्वन् |
| ८५ | २ | श्रीगान्धिनमभ्यशंसत् | श्रीगान्धिनमभ्यशंसत्[१] |
| ८५ | ३ | प्रत्यपीपदत् | प्रत्यपीपदत्[२] |
| ८५ | १० | समक्रीडे | समक्रीडे[६] |
| ८५ | १३ | स प्रति | सम्प्रति |
| ८७ | १७ | नायकञ्च | नायकश्च |
| ८९ | २० (पा०टि०) | शुषश्रूयामित्यर्थं: | शुश्रूषायामित्यर्थं: |
| ९१ | ६ | विक्रियतेति | विक्रियेतेति |
| ९१ | १५ | व्यत्यघ्न | व्यत्यघ्नन् |
| ९३ | २५ (पा०टि०) | राज्सेन | राज्येन |
| ९४ | २४ | भृतो भतो | भृतो भूतो |
| ९६ | ५ | साहंयता | साहंयुता |
| ९७ | ३ | विनाशकारो | विनाशकरो |
| ९७ | २५ (पा०टि०) | निष्पम्न | निष्पन्नो |
| ९९ | ४ | बहुलीभवतो | बहुलीभवतो[१] |
| ९९ | १४ | ···ञ्जातीयकनियानुरोधेन | ···ञ्जातीयकनियमानुरोधेन |
| १०२ | १० | विपक्षवणद्गुदोषा | विपक्षवद्गुणदोष। |
| १०३ | ६ | वक्तुं क्षमन्त | वक्तुं न क्षमन्त |
| १०३ | १५ | संयास्ते | संख्यास्ते |
| १०५ | १६ | सृगयते | मृगयते |

| | | | |
|---|---|---|---|
| ११२ | १२ | अननाभूंताश्च | अनन्तभूंताश्च |
| ११४ | ३ | प्रत्यवचने | प्रत्ययवचने |
| ११६ | २४ (पा०टि०) | आगमप्राधानानि | आगमप्रधानानि |
| ११७ | ८ | राजनीतिनिप्ठा | राजनीतिनिष्ठा |
| ११७ | १२ | भवति॰ | भवति |
| ११८ | २० (पा०टि०) | नन्दनम | नन्दनम् |
| ११९ | २४ ( „ ) | इण | इण् |
| १२६ | ३ | म | मे |
| १२६ | ६ | विसष्टेनेव | विसृष्टेनेव |
| १२६ | १० | प्रापितम् | प्रापिपम् |
| १२७ | २३ (पा०टि०) | कृति | कृती |
| १२८ | २० ( , ) | इत्यादिनोपधाय नस्य | इत्यादिनोपधाया नस्य |
| १३० | २ | प्रगात् | प्रागात् |
| १३२ | १२ | नालभत् | नालभत |
| १३२ | १५ | पश्चादाशीविशेषण | पश्चादाशीविषेण |
| १३३ | २५ | संनिधातमृते च | संनिधातुमृते च |
| १३४ | २६ | पाक्ष्यिकीण[3] | निरस्ता |
| १३५ | ६ | तामस्मि॰ | तामस्मि॰ |
| १३५ | २१ | प्रक्रंस्ये॰ | प्रक्रंस्ये॰ |
| १३५ | | (पा०टि०) १ | १ अस्मीत्यहमर्थेऽव्ययम् ।<br>दासे कृतागस्युचितः<br>प्रभूणां पादप्रहार इति<br>सुन्दरि नास्मि<br>दूये इत्यत्र यथा । |
| १३५ | २५ (पा०टि०) | १. प्रारप्स्य--- | २. प्रारप्स्य··· |
| १३७ | ४ | प्रशान्तकारो | प्रशान्ताकारो |
| १३८ | १२ | नैक ऽपि | नैकोऽपि । |
| १३९ | १८ | सत्याग्रहपरिग्रान्न | सत्याग्रहपरिग्रहान्न |
| १४१ | १२ | अहभिनवं | अहमभिनवं |
| १४१ | १८ | स्यादेतदवमाचरतां | स्यादेतदेवमाचरतां |

# विषयविशेषानुक्रमः

## प्रथमः परिच्छेदः



## द्वितीयः परिच्छेदः

## तृतीयः परिच्छेदः



## चतुर्थः परिच्छेदः

## पञ्चमः परिच्छेदः



## षष्ठः परिच्छेदः





ॐ नमः परमात्मने ।

श्रीचारुदेवशास्त्रिप्रणीतम्

# श्रीगान्धिचरितम्

## अथ प्रथमः परिच्छेदः

महात्मेति समाख्यानं यस्येह विदितं भुवि ।
लोकोत्तरं च चारित्रं स वाचां विषयोऽस्ति नः ॥१॥

महितो यश्च लोकस्य महतोऽमहतोऽपि च ।
आकुमारं यशो यस्य स वाचां विषयोऽस्ति नः ॥२॥

योऽभ्यस्यति कलावेको धर्मसूनुरिवापरः ।
आसिधारं व्रतं तीव्रं स वाचां विषयोऽस्ति नः ॥३॥

ब्रह्मक्षत्रे विशश्शूद्रा अन्त्यजाश्श्वपचा अपि ।
आत्मैवाभून्मुनेर्यस्य स वाचां विषयोऽस्ति नः ॥४॥

महेश्वरे परं श्राद्धः परं सद्योगमास्थितः ।
योऽपाकरोद्ध्रियं सर्वां स वाचां विषयोऽस्ति नः ॥५॥

यो न हृष्यति संपत्त्या विपत्त्या च न दुःख्यति ।
शुभोदर्काः क्रियाः कुर्वन्स वाचां विषयोऽस्ति नः ॥६॥

स्तुतिनिन्दे अनादृत्य लोकसङ्ग्रहतत्परः ।
इच्छति ब्रह्मभूयं यः स वाचां विषयोऽस्ति नः ॥७॥

येन नीतोऽनुशिष्टश्च मर्त्यलोकोऽपि नाकति ।
लब्धालोकः सहामोदः स वाचां विषयोऽस्ति नः ॥८॥

अकारणद्विषः कांश्चित्परार्थेनोदरम्भरीन् ।
यो जिगीषति हार्देन स वाचां विषयोऽस्ति नः ॥९॥

य: प्रमाथमनालम्ब्य सहोद्योगं विवर्ज्य च ।
मोक्षमीप्सति वर्षस्य स वाचां विषयोऽस्ति न:[1] ॥१०॥

अस्ति सुराष्ट्रदेशे पोरबन्दरमिति ख्यातमपृथुलं सामिस्वायत्तं राज्यम् । एतद्धि हनुमद्वंशीया बाहुजा:[2] प्रशासति । ऊर्जस्वले[3] द्विषन्तपे[4] प्रथितयशसि श्रीविक्रमजिति भूपे भुवं शासति प्रधानसाचिव्यं गान्धि[5]वंशजेष्ववतस्थे । तदानीं श्रेष्ठ्युत्तमचन्द्रो गान्धी प्रधानसचिवपदं भूषयाम्बभूव । स्थिरधीर्दीर्घदृष्टिर्यतचेता: श्रीयुत उत्तमचन्द्र: कार्यकौशलेन गुणमहिम्ना च राजवंश्यानां प्रजानां च बहुमतो बभूव । राजकार्यं निर्वाहयन् सोऽन्तरा अन्तरा स्वस्य स्वाच्छन्द्यप्रियत्वमपि प्रकटयाञ्चकार ।

वंशवर्णनम्

अप्राप्तव्यवहारे श्रीविक्रमजित्सिंहे तस्य माता कार्यासनं परिजग्राह । एकदा किल राजप्रसू:[6] कस्यापि हेतोरमात्याय श्रीलायोत्तमचन्द्राय भृशं चुकोप, अधिकाराच्च तं भ्रंशयाञ्चकार आदिदेश च सैन्यान् गृहा अस्याग्नेयचूर्णेन निर्हण्यन्तामिति[7] । एवमव-

---

१. निरायुधा अपि परतन्त्रा: प्रजा यदि राज्यतन्त्रस्य नोपकुर्युरनिष्टानि शासनानि चातिक्रामेयुर्विप्रकृता: प्रमाथाय प्रचोदिता अपि च प्रमाथं परिहरेयुस्तर्हि ध्रुवं ता: स्वातन्त्र्यमाप्नुयुरिति कथानायकस्य श्रीगान्धिनो राद्धान्त: । वर्षशब्दोऽत्र देशवचन: । भरतस्य वर्षं चेहाभिप्रेतम् ।

२. ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्य: कृत: इत्यादिश्रुतिप्रामाण्याद् बाहुजा: क्षत्रिया: । तथा च क्षत्रियनामस्वमर:—मूर्धाभिषिक्तो राजन्यो बाहुज: क्षत्रियो विराट् इत्यादि पठति ।

३. ऊर्जस्वलमिति ज्योत्स्नातमिस्रेत्यादिना शास्त्रेण वलच्प्रत्ययान्तं निपातितम् । ऊर्जस्वल: स्यादूर्जस्वी य ऊर्जोऽतिशयान्वित:—इत्यमर: । ऊर्जशब्दोऽदन्त: सान्तश्च ।

४. द्विषत्परयोस्तापे: इत्यनेन खच । अरुर्द्विषत्० इति मुम् ।

५. गान्धीति गन्धानां पणितुराख्या च्युतसंस्कृतिकापि लौकिकीहादृता । महात्मन: पूर्वजा: किल गन्धानां पेणिर इति श्रूयते ।

६. जनयित्री प्रसूर्माता जननी—इत्यमर: ।

७. हन्तेरत्पूर्वस्य इत्यनेन योगेन णत्वम् ।

स्थितेऽमात्य उत्तमचन्द्रः पुत्रकलत्रादिभिः समं यवनगृह[1]मिति पत्तनं प्रति प्रतस्थे। तत्रत्यं यवनप्रभुं च प्रपेदे। यवनप्रभुश्च तस्मै प्रीतिपुरःसरं स्वागतं व्याजहार। अमात्यश्च दक्षिणेतरेण करेण मूर्ध्नि निहितेन तं प्रणनाम। सव्येन पाणिना शिरसि निहितेन प्रणतिः समुदाचारातिक्रम[2] इति लोकविद्विष्टा। राजसभायान्तु साऽधिक्षेप इवेति परं दूषणं गण्यते। तस्मात् तदमात्यस्य चरितं राजसभासदोऽत्यर्थं दिद्विषुः। यदा च यवनप्रभुः किं कारणं भवान् विरुद्धेन प्रकारेण मामभ्यवीवदतेति तं पप्रच्छ तदाऽमात्य एवं प्रत्युवाच—श्रूयतां प्रभो! पोरबन्दरराजकुलप्रसूतैः कदर्थितो निराकृतश्चाप्यहं सफलीकृतभर्तृपिण्डो भृत्य इव नित्यं तच्छिवानुध्यानपरो भविष्यामि सततं च तद्धितं कामयिष्ये। अतोऽहमेतं वामेतरं करं तन्नमस्यायां विनियोगाय रिरक्षिषामीति। एतदाकर्ण्य यवनप्रभुरस्यामात्यस्य स्वामिनि भक्तिं स्वदेशेऽनुरक्तिं तेजस्वितां च सम्यगनुमिमाय। अस्य स्फुटवादितया च प्रमनाः[3] स एनं प्रधानसाचिव्ये नियुयुजे।

ऊर्ध्वञ्च लघोः कालात् प्राप्तव्यवहारो गुणगृह्यः[4] श्रीविक्रमजित्सिंहः स्वं भूतपूर्वममात्यं सुमेधस[5]मुत्तमचन्द्रमाकार्य सम्यक् सत्कृत्य च यथापूर्वं व्यापारयामास।

श्रीयुक्त उत्तमचन्द्रे स्वर्याते सति तदात्मजः श्रीकर्मचन्द्रो गान्धी तत्पदमधितष्ठौ। अमात्यः श्रीकर्मचन्द्रः पञ्चविंशतिमब्दान्महता

---

१. जूनागढ़ इति रूढिः।
२. अत्र मुहम्मदानुगानां समुदाचारोऽभिप्रेतः। तत्रैक एव पाणिः प्रणतौ व्यापार्यते। आर्याणां तु युतं हस्तद्वयमञ्जलिरित्याख्यं शिरसि निधीयत इत्याचारः। उक्तं च। वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् इति।
३. प्रकृष्टं मनो यस्य सः। हृष्टमानस इत्यर्थः।
४. गुणं गृह्यत इति। पदास्वैरिबाह्यापक्ष्येषु च इति पक्ष्येऽर्थे ग्रहेः क्यप्। गुणपक्षपातीत्यर्थः।
५. शोभना मेधाऽस्येति सुमेधाः। सुधीरित्यर्थः। नित्यमसिच्प्रजामेधयोः इति बहुव्रीहेरसिच्समासान्तः।

नैपुणेन[1] पोरबन्दरराज्यकार्यजातं चकार। ततः केनापि कारणेनावनिपस्तस्मिन् विमना बभूव। एव सत्यमात्यो राजकोट इत्यत्र प्रधानसाचिव्यमवाप्य पुत्रकलत्रादिभिः समेतः तं प्रदेशं जगाम। स राजकोटराज्यहिताय तथा प्रयेते यथास्मिन्नचिरेण पिप्रिये[2] भूमिपः। भूमिं सम्पदं चास्मै दित्साञ्चक्रे। कर्तव्यनिरतोऽगृध्नुर्गतस्मयः श्रीकर्मचन्द्रश्चिन्तयामास—एवं भूमिप्रतिग्रह उत्कोचान्न विशिष्यते। वैतनिकः सन् यदहमेतद्राज्यमुपाकार्षम्, तद् धर्ममेवाचारिषम्। सम्पदः स्वीकृतिस्त्वनौचितीं नातिक्रामतीति। एवं निश्चितमतिरमात्यः प्राभृतं प्रत्याचख्यौ। पश्चान्नृपतिना भवता स्वप्रसूतिवृत्तिरवश्यं कल्पनीयेति भूखण्डस्यादानमार्थादापद्यत इत्यादिभिर्वचोभिरसकृत् प्रयुक्तः श्रीकर्मचन्द्र उपह्रियमाणस्य कनीयांसमेवांशमादातुमनुमेने।

श्रीकर्मचन्द्रस्यापरो जीवनवृत्तान्तस्य धीरत्वं निर्भीकत्वञ्चोपपादयति। तद्यथा—एकदा किल राजकार्यप्रतिनिधिरमात्यकर्मचन्द्रस्य संनिधौ राजानं परुषाभिर्वाग्भिस्सन्ततक्ष। इदं ह्यमात्यो न सेहे परुषं च प्रतिनिधिं जगर्हे। क्रोधताम्राक्षः प्रतिनिधिः कर्कशमिदममात्यमूचे—त्वरितं भवतेदं दुर्वृत्तमनुशोच्यम्, अहञ्च क्षमां याच्यः। इतरथा भवानपि मत्सकाशादवज्ञामवाप्स्यतीति। परममात्यः श्रीकर्मचन्द्रः सत्यनिष्ठ इति नानुतापं भेजे, धीर इति च न क्षमां ययाचे। एवं सति सुतरां संदिदीपेऽस्य क्रोधः, ववृधे च नयनयोररुणिमा[3]।

---

१. हायनान्तयुवादिभ्योऽण् इति युवादित्वादणि रूपम्। निपुणस्य भावो नैपुणम्।

२. प्रीङ् प्रीतौ इति धातोर्देवादिकाल्लिट्। अयं सकर्मक इति भट्टोजिदीक्षितवचः प्रायिकम्। नित्यत्वे त्वस्य महाकविप्रयोगा विरुध्येरन्। कविकुलपतिः श्रीकालिदासोऽपि नित्यं सकर्मकत्वं नाभ्युपैति। तथा हि तत्रभवान् प्रायुङ्क्त—

तत्र सौधगतः पश्यन्यमुनां चक्रवाकिनीम्।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये॥

३. अरुणस्य भावः अरुणिमा। वर्णदृढादिभ्यः ष्यञ्च इत्यनेन चकारानुकृष्ट इमनिच्।

परममात्यो मनागपि न विव्यथे। एवं विवदमानयोस्तयोः कियानपि कालो ययौ। पप्रथे च पुर्यां प्रवृत्तिः[1]। चुक्षुभुश्च[2] पौराः। पौरजान[3]-पदक्षोभं श्रीकर्मचन्द्राय ग्रहिलत्वं[4] च समीक्ष्य सोऽनन्यगतिः प्रतिनिधि-स्तेन सन्दधे।

श्रीकर्मचन्द्रो भगवति नितातं श्राद्धः[5] तदुपासायां नित्यं रेमे। भगवद्गीताश्च[6] नैयत्येनाधिजगे। सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजेति श्लोकार्धं स परमादरेणाम्रेडयामास।

एवं पुण्यशीलस्य श्रीकर्मचन्द्रस्य भार्यापि गुणैतस्य सदृशी बभूव। पतिशुश्रूषणे रता दैवतार्चायां प्रवृत्ता ब्राह्मणादिसपर्यायां प्रसक्ता व्रतोपवासचर्यायां प्रसिता सा सर्वस्य मान्या बभूव। समृद्धिमत्यपि सा विनीतवेषा। संभाविताप्यनुत्सिक्ता। उच्चैःशिरा अप्यधोदृष्टिः। कृशतनुरपि सा महासत्त्वा। नित्यं धर्मानुष्ठानेन वनीपक[7]मनोरथ-प्रपूरणेन च सा स्वगृहं तीर्थतां निनाय। आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानामिति कविभणितिमनुवर्त्तमाना साऽऽर्तानामातु-

---

१. वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्याद्—इत्यमरः।

२. क्षुभ सञ्चलने इत्यकर्मकाद्दैवादिकाद्धातोर्लिट्।

३. पुरे वसतीति पौरः शैषिकोऽण्। जनानां पदं जनपदः। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति परवल्लिङ्गत्वे प्राप्ते नाड्यपजनोपपदानि व्रणाङ्गपदानि इति लिङ्गानुशासनात् पुंस्त्वम्। जनपदे भवः जानपदः।

४. ग्रहिलत्वं निर्बन्धपरत्वम्। तथा च नैषधे प्रयोगः—
न निशाऽखिलयापि वापिका प्रससाद ग्रहिलेव मानिनी।

५. श्रद्धावान् श्राद्धः। प्रज्ञाश्रद्धार्चाभ्यो णः इति मतुबर्थीयो णः।

६. गीता इति पदं प्राचीनाः प्रायेण स्त्रियां बहुत्वे प्रयुयुजिर इति नागोचरं विदुषाम्। स्त्रियामेकत्वे प्रयोगस्तु नचिरप्रवृत्तः।

७. वनीयको याचमको मार्गणो याचकार्थिनौ इति याचकानामस्वमरः। तत्र वनीपक इत्यपि पाठो लिपिसारूप्यजः शिष्टानुमोदितः। अनयैव दिशा-ऽसद्रूपाणि शब्दान्तराण्यपि साधुत्वमापद्यन्ते। वनीं पातीति तु क्लिष्टो विग्रहः।

राणां च दुःखं लघयितुं[1] मुक्तहस्ता धनमुत्ससर्ज ।

पञ्चविंशत्युत्तरनवशतोत्तरसहस्रतमे विक्रमवत्सरे कार्तिके मासि मङ्गल्यायां कृष्णप्रथमायां पुण्ये पोरबन्दरपुरे कथापुरुषो महात्मा गुण्याच्छ्रीकर्मचन्द्रात् प्रातःस्मरणीयायां श्रीपुतलीबाईदेव्यां सत्यामजायत । प्रसन्नदिग् मृदुसुरभिवातं तज्जन्मदिनं सर्वेषां सुखकरमभूत् । अहो धर्ममुद्भावयिताऽधर्मं च न्यग्भावयिता कश्चित्प्राणभृद्भुवमवतरतीत्यनन्दिषुर्दिविषदः[2] । आनन्दनिर्भराश्च ते जलजानध्मासिषुः सुमनसश्चावर्षिषुः । अमात्यकर्मचन्द्रेणाधीष्टः पुरोधा अस्य पृथुकस्य जातकर्मादिक्रियाः शास्त्रदृष्टेन विधिना व्यधात् । पिता चास्य मोहनदासो गान्धीति नामाकरोत् । पञ्चवर्षदेश्य[3] एवैष मातुरुपदेशे मनोऽददात् पितुश्च कथा उपाशृणोत् । लिपिग्रहणं च प्रारभत । आसप्तमाब्दं श्रीमोहनदासः पोरबन्दरपाठशालायां विनयमग्रहीत्[4] । ततो जनयितरि राजकोटं गते सति वर्णाक्युलर् स्कूल इत्यत्र वर्षत्रयं शिक्षामुपादित । दशवर्षः[5] सोऽमदाबादसुराष्ट्रहाईस्कूल इत्यत्राध्ययनमुपाक्रंस्त । द्वादशवर्षः स कस्तूरबाई इति सुगृहीतनामधेयामात्मनः सदृशीं सुवर्णां कुलोद्गतां कन्यामुपायंस्त । सप्तदशवर्षोऽयं प्रावेशिकीं[6] परीक्षामुदतारीत् । उत्तीर्य चेमां परीक्षां भावनगरमहाविद्यालये प्रवेशमलब्ध ।

*(margin:)* श्रीगांधिनो जन्माद्युदन्तः

अनतिक्रान्तकैशोर एव श्रीमोहनः प्रकृत्या सत्यप्रवण आसीत् । नास्ति सत्यात्परो धर्म इति स दृढं व्यश्वसीत् । सततमाचाररक्षण-

---

१. लघूकर्तुम् । तत्करोति तदाचष्ट इति णिच् ।
२. देवा इत्यर्थः । आदितेया दिविषदो लेखा अदितिनन्दनाः—इत्यमरः ।
३. ईषदसमाप्तं पञ्च वर्षाणि भूतः पञ्चवर्षदेश्यः । ईषदसमाप्तौ कल्पब्देश्यदेशीयरः इति देश्यप्रत्ययः । तद्धितार्थे द्विगुः ।
४. विनयः शिक्षा । विनयं प्रणतौ प्राहुः शिक्षायां विनयो मतः—इति विश्वः ।
५. दशवर्षं भूत इति दशवर्षः । चित्तवति नित्यम् इति ठञो लुक् ।
६. प्रवेशः प्रयोजनमस्या इति । तदस्य प्रयोजनम् इति ठञ् ।

परोऽभूत् । तनीयसीमपि स्खलितिमत्यन्तमशोचीत् । एकदा किल पितृशुश्रूषारतस्यास्य व्यायामकालोऽत्यगात् । तदाऽभ्रितमाकाशमिति स कालात्ययं नालक्षयत् । यावत्स व्यायामभुवं नाप्नोत्तावद् व्यायन्तुं समवेता जना व्यपायन् । अपरेद्युरध्यापकेन किमिति ह्योऽसंनिहित आसीरिति पृष्टो यथातथमुदाहरत् । अध्यापकस्तु वैतथ्यमस्य वचसोऽभिशङ्क्यैनमाणकद्वयं दण्डयत् । एतेन व्यतिकरेणास्य हृदय-परिमाथिनी रुजाऽऽविरासीत् । अहमनृतीत्याशङ्कितो गुरुणेति स बलवद् व्यषीदत् । परं सत्ये स्वाभिनिवेशं नेषदप्यशलथयत् ।

हाईस्कूल इत्यत्राधीयानः श्रीमोहनः सम्पर्कमनभिलाषुकोऽपि कदाचित् तद्दोषापनिनीषयैव प्रयुक्तो दुर्वृत्तैरुद्धतैश्छात्रैः सम्पृच्य व्यसनेषु प्रासजत् । कुतर्कनुन्नः स न किमपि श्रदधत्त । ईश्वरमपि कुशलकल्पनामात्रोत्थमभ्यमंस्त । मांसादिवर्ज्यभोजने न किमपि वचनीयमैक्षत । अभुक्त चान्यैः सतीर्थ्यैः सहासकृन्मांसम् । इदं च प्रथमं विरसमुद्वेजकं च प्रतिभादपि कालेन रुच्यमापतन्मनसः । यदा यदा चैनदश्नात्तदा तदाऽशनाया मे नास्तीति व्यपदिश्य मात्रोप-कल्पितं मधुरमप्यभ्यवहारं पर्यहरत् । तेन चात्मानमनृतिकतामनयत् । परं नैव चिरमेवं भवितुमाचरितुं वाऽशकत् । सात्वतां[1] कुले जातस्यास्य संस्कारैरुदबोधि, अनुतापश्चानल्पः समजनि । यत एवं विरुद्धमाचरता ऽनेनाहारि[2] चेतःशान्तिरतस्तत्प्रत्यापत्तये महान्तं यत्नमातिष्ठत् । उक्तपूर्वैर्बालिशैश्च सङ्गं त्यक्त्वा पुनरपि शास्त्रेषु यथापुरं श्रद्धामदधात्, पुरातनानाचारांश्च बह्वमन्यत । प्रत्यजानीत च यतो न शक्यं मया-ऽनृतमभिवदितुमतो जीवन्त्यां महनीयायां मातरि नाहं मांसमशिष्या-मीति । एवं च परिहृतं मांसाशनमत्यन्ताय परिहृतमभूत् ।

प्रावेशिकीं परीक्षामुत्तीर्णस्य श्रीगान्धिनः पिता स्मर्तव्यशेषतामयासीत् । भावनगरमहाविद्यालये नैदाघेऽनध्याये

अध्ययनार्थमाङ्गल-देशगमनम्

प्रवृत्ते सति श्रीगांधी राजकोटमागात् । तत्र कश्चिद् द्विजन्मा तमन्वशात्—कामये भवान्

१. भागवतानामित्यर्थः ।
२. हरतेर्ण्यन्तात्कर्मणि लुङ् । हारितेत्यर्थः ।

पित्राध्यासितपूर्वं सचिवपदमधिरोहेदिति। तच्चेहाध्ययनेन न शक्यमधिरोढुमिति पश्यामि। अद्य विपरिवृत्तो लोकः, क्षिप्रं च परिवर्तते। उपाधिपरीक्षोत्तीर्णा अपि विरलमेव वेतनं लभन्ते। यावता च कालेन भवान् उपाधिपरीक्षामुत्तीर्य व्यवहाराध्ययनं परिणमयिष्यति तावताऽधीतव्यवहारा बहवोऽपरे सचिवपदप्राप्तये[1] कल्पिष्यन्ते। अतोऽक्षमोऽयमर्थः कालहरणस्येत्यत्र विद्योपादानं विरमय्यैषम एवाङ्गलदेशं प्रति प्रस्थानीयम्, उत्तरवादित्वलाभाय च व्यवहाराध्ययनं प्रक्रमणीयमिति। एवमनुशिष्टस्य श्रीमोहनस्याङ्गलदेशदिदृक्षोच्चपदप्रेप्सा चाङ्गलदेशगमने प्रयोजिके अभूताम्। अतः सोऽग्रजाय स्वाभिलाषं न्यवेदयत्। स चानुजस्य हितमनुरुन्धानस्तमभ्यनन्दत्, अचिन्तयच्च पित्र्यं रिक्थमपि विक्रेयं चेत्स्यात् स्यान्नाम, न तेनास्मत्क्षतिः। व्यवहाराधीतये तु तातेन मोहनेना[2]ङ्गलदेशस्य गमनमवश्यसंविधेयं मयेति। परं यदास्य माता विदेशगमनोपन्यासमवेदीत्तदाऽशोचीत्। विदेशस्थोऽयं विलासप्रियो वा भवेत्, स्वैरितां वा व्रजेत्, खिस्तमतं वाऽऽश्रयेद्, उपतप्तो[3] वाऽनवेक्षितोऽनुपक्रान्तश्च[4] महद्दुःखमनुभवेदित्याद्याशङ्कमाना सा परं पर्याकुलाऽभूत्। उद्विग्नां मातरमुपसान्त्वयितुमनुमानयितुं च श्रीगान्धी बहुधा प्रायतिष्ट।

विविधं बोधिता सनिर्बन्धं प्रार्थिता च सा यदा नानुमतिमददात्तदा श्रीगान्धिनो हिताकांक्षी कश्चिद्यतिस्तां विदेशगमनेन भवित्रीं स्वसूनोर्भूतिमावेदयत्। श्रदधापयच्च नैष कदाचिन्न्याय्यात्पथः प्रविचलिष्यतीति। तत्र यतौ श्रद्धामुपेयुषी सा तद्वाचोयुक्त्या[5]ऽपास्तसंशया प्रस्तुतं विदेशगमनमन्वमन्यत। प्रस्थानात् प्राक् च सा तनूज-

---

१. पर्याप्तिवचनस्य क्लृपेरलमर्थत्वाद् नमःस्वस्तीत्यादिना चतुर्थी।

२. मोहनोऽत्र गमनक्रियायाः कर्ता देशश्च कर्म। उभयप्राप्तौ कर्मणि इति नियमात्कर्मण्येव षष्ठी कर्तरि चानुक्ते तृतीया।

३. उपतप्तो रुग्णः। उपोपसृष्टः तप सन्तापे इति धातू रोजने वर्तते। तथा हि छन्दोगा आमनन्ति—तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्इत्यादि

४. अचिकित्सितः। उपक्रमः स्यादुपधा चिकित्सारम्भविक्रमे इति विश्वः।

५. वागुदिक्पश्यद्भ्यो युक्तिदण्डहरेषु इति षष्ठ्या अलुक्।

मिमाः प्रतिज्ञा अकारयत्—सुरां न पास्यामि, मांसं नाशिष्यामि, मैथुनं वर्जयिष्यामीति। एवमनुज्ञातः श्रीगान्धी पितृव्येणोपहृत-सहायको मात्रा कृतप्रास्थानिक[1]कौतुको भ्रात्रा दत्ताशीराङ्गलदेशं प्रति प्रास्थित। प्रस्थानकाले च स एकोनविंशतिवर्षोऽभूत्।

पञ्चचत्वारिंशदुत्तरनवशतोत्तरसहस्रतमे वत्सरे भाद्रपदे मासि श्रीगान्धी द्वाभ्यामपराभ्यां स्वदेशजाभ्यां सहाङ्गलदेश-राजधानीं लन्दनाख्यामवापत्। विक्टोरियापथिकाश्रमे च वस्तुमारभत। भरतवर्षीयः प्रत्नशिष्टाचारप्रिययोर्मातापित्रोरय-मात्मजः प्रतीच्यां सभ्यतां नावेत्। पथिकाश्रमस्था अस्य नेपथ्यं संलापं वर्तनं च नाभ्यरोचयन्नत्यर्थं च तमुपाहसन्। तैर्नित्यमुपहा-स्यतां नीतः श्रीगान्धी तदाश्रमत्यागमावश्यकमजानात्। अतः स स्वदेशजं कमपि सुहृदं कुतश्चित्कालादाङ्गलदेशे कृतवसतिं विद्युद्वार्तया-कारयत्। आगतः सुहृच्छ्रीगान्धिनं स्वदेशरीत्या क्लृप्तवेशं दृष्ट्वा परं विस्मयमयासीत्। सपदि च तं रिचमण्डाख्यां स्ववासभूमिमनैषीत्। तत्र स्वेनाध्युषिते चैकस्मिन्निकेतने तस्य वासमकल्पयत्।

लन्दननगरे वसतिः

कञ्चित्कालं श्रीगान्धी सुहृदोऽस्य सविधेऽत्यवाहयत्। स च सुहृत्सोदर्यमिव तमाचरत्। आङ्गलाचारमग्राहयत्। आङ्गलसंलाप-प्रकारमपि प्रादर्शयत्। यद्यच्च हितं पथ्यं चापश्यत्तत्तच्छ्रीगान्धिन-मुपादिशत्। इह देशे मांसाशनमावश्यकमिति च निरदिशत्। परं स्थिरनिश्चयं तन्मनो न प्रतीपयितुं प्राभवत्। यदि मांसं नाशिष्यसि तर्हि तन्वीयं ते तनूरधिकं तानवं प्राप्स्यति दौर्बल्यं च भूयो भविष्यतीति मित्रेणासकृत्प्रयुक्तोऽपि श्रीगान्धी व्यञ्जनाद्यपेतं शाकादि भुञ्जानोऽनाशितो[1]ऽपि मांसं नाश्नात्। प्रतिज्ञां विरोद्धुं

---

१. प्रस्थानकाले भवं प्रास्थानिकम्। कालाट्ठञ्। प्रस्थानशब्दोऽत्र प्रस्थानकाल उपचरितः। कौतुकानि मङ्गलानि। अत्र कोषः—

कौतुकं नर्मणीच्छायामुत्सुके कुतुके मुदि।
पारम्पर्यागतख्यातमङ्गलोद्वाहसूत्रयोः॥

१. आङ्पूर्वादशेः कर्तरि क्तो निपातित आशितः कर्ता इत्यादात्तत्वं विदधता

नोत्सह इत्येव चोत्तरं प्रादात् ।

एकदा किल किमपि नाटकं प्रयोगतो[1] दिदृक्षुः श्रीगान्धिन एष सुहृत्तत्साहचर्यं कामयमानस्तमाकारयत् । ततस्तौ मिलितौ रङ्गं प्रति प्रास्थिषाताम् । संनिहिता भोजनवेलेति भुक्त्वैव गमनीयमिति कृतमती तावन्तिकस्थं महान्तमेकं हर्म्यप्रायं भोजनालयमवाप्य तत्र भोजनेच्छया व्यालम्बेताम् । स्वं स्वमासनमध्यासीनैः सभ्यैः शतशो जनैः परिगतः श्रीगान्धी स्वदेशजस्य मित्रस्य संनिकर्ष एवासनमग्रहीष्ट । परिवेष्टारश्चोच्चावचं भोज्यपेयादिकं परिवेष्टु[2]-मारभन्त । परिवेषितं भोज्यं दृष्ट्वा जातशङ्कः स मित्रं सगद्गदं मन्दमन्दमिदमन्वयुङ्क्त—कस्य विकृतिरेष यूष इति । [3]तत्खल्वि-मामाचारविरोधिनीं पृच्छां श्रुत्वा सम्भ्रान्तमनः समजायत । अब्रवीच्च—सभ्यो बुभूषुर्भवान् किमिति सभ्यतानियमान्नानुवर्तते । मिलितायां परिषद्येवञ्जातीयको[4]ऽनुयोगः समाजस्थितिं भिनत्ति । तूष्णीं भुज्यतामिति । श्रीगान्धी मित्रस्येमामनुशिष्टिमनादृत्यारात् स्थितं परिवेष्टारं पर्यनुयुज्याजानात् पललसम्पृक्तो यूष इति । एतज्ज्ञात्वा स पादमूलमुपसर्पतो दिदङ्क्षतो दन्दशूकादिव ततो भोजनादुदविजत । स मातुरुपदेशस्य स्वस्य संविदाश्चास्मरत् । महच्चानुसमज्वरत्[5] । क्षणं च प्रतिपत्तिमूढोऽभवत् । तत ऊर्ध्वमा-

---

सूत्रकारेण । ण्यन्ताद्वाऽशेः कर्मणि क्तः । आशितो भोजितः । अत्र तु गौण्या वृत्त्या तृप्त इत्यर्थः ।

१. प्रयोगमधिकृत्येत्यर्थः । ल्यब्लोपे कर्मण्युपसंख्यानम् इत्योपसंख्यानिकी पञ्चमी । तस्यास्तसिरादेशः ।

२. परिपूर्वो विष्लृ व्याप्तौ इति धातुः परिवेषणे वर्तते । माठरकौण्डिन्यौ परिवेविषाते इति भाष्यप्रयोगात् ।

३. तदिति सर्वनाम भिन्नं प्रत्यवमृशति ।

४. प्रकारवचने जातीयर् इति प्रकारवति जातीयर्प्रत्ययः ।

५. अनुसमज्वरत् अन्वतप्यतेत्यनर्थान्तरम् । तथा चौपनिषदी श्रुतिः—

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥

सनादुत्थाय च बहिरागमत् ।

यतो रिचमण्डतो लन्दने सप्ताहस्य सकृद् द्विर्वाऽऽगमः शक्योऽभूदतो भिषजा श्रीप्राणजीवनेन प्रचोदितः श्रीगान्धी लन्दननगर्यां क्वचिद् गेहे कुटुम्बाङ्गतया स्थितिमकुरुत ।

अचिरेणैव च कालेन लन्दनवासेन यूनः श्रीगान्धिनो हृदयमयोधातुरिवायस्कान्तशकलेन हारिण्या[1] पश्चिमया सभ्यतया समाकृष्टम् । सुहृत्प्रेरणया च फलितम् । आङ्गलाचारेष्वस्याभिरुचिरुदैत् । क्रमेण च प्रचयमुपैत् । महानस्य तत्र पक्षपातो ऽभूत् । स आङ्गलसाकल्पम्[2], आङ्गले नृत्यगीते, आङ्गलानुद्धर्षान्, आङ्गलानाचारांश्च मनोज्ञा[3]न्यमन्यत । अतो नृत्यगीतादिष्वात्मानं विनेतुं स कमपि सभ्यतममाङ्गलमुपासीदत्[4] । स च तं नियोगतः प्रत्यहमुपादिक्षत् । एतावन्मात्रया विलासप्रवृत्त्या श्रीगान्धिनश्चेतः कदाचिदस्वास्थ्यमभजत् । मातुर्वचश्चिन्तयमानस्य तस्य मनसो वैयग्र्यमभवत् । तेन च नृत्यतोऽस्य स्खलनं गायतो वैस्वर्यं च समवर्तेताम् । परं निरन्तरं प्रयतमानेन मया सभ्यता पुराधिगम्यत[5] इत्याशंसा तमाश्वासयत् ।

सभ्येन मानवेन व्याख्यानकलाकोविदेन भाव्यमिति प्रत्ययितः श्रीगान्धि बेल् इति नामानं वाग्मिनं गुरुमभ्यगच्छत् । व्याख्यानकलां चाभ्यास्यत् । एतदभ्यासनिरतस्यास्यैकपदे मोहो नष्टः प्रबोधश्चोन्मिषितः । स आत्मन्यचिन्तयत्—न मया यावज्जीवमाङ्गलदेशे वस्तव्यमस्ति । व्याख्यानपाटवमधिगत्यापि किमहं करिष्यामि ।

---

१. अवश्यं हरतीति हारिणी । चेतोहरेत्यर्थः । आवश्यके णिनिः ।
२. आकल्पो वेषः । आकल्पवेषो नेपथ्यं प्रतिकर्म प्रसाधनम्—इत्यमरः ।
३. नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम् इति क्लीबं शिष्यते । एकवद्भावस्तु वैकल्पिकत्वान्न कृतः ।
४. उपपूर्वः सदिर्गुरोरभिगमे वर्तते । पाणिनिमुपसेदिवान् कौत्सः ।
५. यावत्पुरानिपातयोर्लट् इति पुराशब्द उपपदे वर्तमानसमीपे भविष्यति लट्प्रत्ययः ।

नर्तं नर्तं कथङ्कारं[१] सभ्यतां चाप्स्यामि। वीणादिवादित्रवादनं तु स्वदेशेऽपि शक्नोमि शिक्षितुम्। अहं च विद्यार्थी। अतोऽहमनन्यमना विद्यामुपाददीय[२] स्ववृत्तियोग्यत्वं च सम्पादयेयेत्येव साम्प्रतम्। सद्वृत्तमहिम्नैव मामयं लोकः सभ्यमाकलयेदिति कामयेय नो चेत्कृतमनया सभ्यतयेति।

इत्थं लब्धबोधः श्रीमोहनदासः प्रतीच्यां सभ्यतामनात्मनीनां[३] निरचिनोत्। स एतामन्तःसारशून्यामविचारितरमणीयाममन्यत। मृगतृष्णिकाया इवास्या अनुसरणमपार्थकमजानात्[४]। इदानीं यावत् स मिथ्याबोधोपहतो मुधैव कालमक्षपयद् धनञ्चाव्यययत्। अधुनाधुनातन्यां सभ्यतायां नितान्तं विरक्तः स विक्रीय वादित्राणि, परिहृत्य नृत्यगीते, विहाय च सज्जां व्यवहाराध्ययने व्याप्रियत। दुःखशीलः[५] पुरातनो ब्रह्मचारीव स यमान् नियमांश्च सततं सेवमानः कालमनयत्। यत्र लन्दननगरे रूप्यकाणां[६] द्विशत्यापि वृत्तिर्न सुकरा तत्रैष पाञ्चाशता रूप्यकैरेवात्मनः समुचितां संविधामकल्पयत्। अधिश्रयणीं क्रीत्वा स स्वयं भोजनमपचत्। एवं दशाणका एव प्रात्यहिकस्तस्योत्सर्गोऽभवत्।

आङ्गलसभ्यतायां विरक्तस्य धर्मोन्मुखस्य विवेकप्रवणस्य श्रीगान्धिनः स्वान्तं[७] विचिकित्साभिराक्रान्तम्। स व्यमृशत् किमिन्द्रियतर्पणमेवेह मानवजन्मप्रयोजनम्। किं महीयान् कश्चिदुद्देशस्तस्य नास्ति। मनुष्य इति कोऽयमर्थः, कुतो जायते प्रेत्य च

---

१. अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् इति करोतेर्णमुल्।
२. अर्हे कृत्यतृचश्च इत्यर्हे कर्तरि लिङ्।
३. आत्मने हिताऽऽत्मनीना। सा न भवतीति। आत्मन्विश्वजनभोगोत्तरपदात्खः इति खः।
४. अपगतोऽर्थोऽस्येत्यपार्थकम्। शेषाद्विभाषा इति विभाषा कप्। पक्षेऽपार्थमिति भवति। विवादोऽपार्थ एवायं पार्थ एव धनुर्धरः इत्यत्र यथा।
५. दुःखं शीलयतीति। शीलिकामिभक्ष्याचरिभ्यो णः इति वक्तव्याण्णः।
६. आहतं रूपमस्येति रूप्यम्। आहतप्रशंसयोर्यप्। ततः संज्ञायां कन्।
७. स्वान्तं मनः। स्वान्तं हृन्मानसं मनः—इत्यमरः।

क्व याति । सभ्यतेतीयमपि कः पदार्थं इति । संशयोच्छेदायोपनिषदो दर्शनानि चाध्येतुकामोऽपि स नाशकदध्येतुम् ।

एकदा श्रीगान्धी जोसिया ओल्डफील्ड इति नामानं भिषजमुपागच्छत् । स तं पर्यचिनोत् मित्रं चाकरोत् । ओल्डफील्डमहाशयस्य धर्मविषये वादानुवादे महत्यभिरुचिरासीत् । अतः स श्रीगान्धिनं हिन्दुधर्मसधिकृत्यानेकान्प्रश्नानपृच्छत् । परं नैष तान् यथेष्टं प्रतिवक्तुं प्राभवत् । एतावतैव श्रीगान्धी दभ्रमेवाहं स्वधर्ममन्तरेण वेदेति व्यक्तमजानात् । तेनात्यरिच्यतास्य मन्युः[1] । ओल्डफील्ड-महाशयोऽनेकान् वारांस्तमेवं न्यगादीत्—ख्रिस्तमतं किमिति नोपाश्रयसे । श्रीमोहनदासस्त्वेवं प्रत्यवादीत्—यावदहं स्वधर्मं नाञ्जसा[2] विद्यां[3], यावच्चास्य महिम्नि परिगृहीतार्थो न स्यां, तावन्न सहे ख्रिस्तमतमाश्रयितुम् ।

श्रीगान्धी थियोसोफिस्टसम्प्रदायाचार्यया श्रीब्लवेत्स्कीति समाख्ययापि समगच्छत । अध्यगीष्ट चास्याः कृतीः । परं परितोषं नाप्नोत् । माञ्चेस्स्टरपुर्यां सोऽपरेणाङ्गलेन समसृज्यत[4] । सोऽप्यसद्धेतुभिर्हिन्दुधर्मं दूषयितुं प्रायतत । ख्रिस्तमतपरिग्रहे च तं प्रायुङ्क्त । प्रतिज्ञां चाकारयद् अहं ख्रिस्तधर्मग्रन्थमध्येष्य इति । श्रीगान्धी यथाप्रतिज्ञं बाइबिल् इत्याख्यं पुस्तकमध्येतुमारभत । परं तेनास्य शङ्कापनोदो नाभूत् ।

एकस्मिन्नहनि प्रावेशिकीं परीक्षामुत्तीर्यागच्छन् श्रीगान्धी कमपि संस्तुतचरं स्वदेशजं[5] सुजनमदर्शत् । स तस्य चित्तोद्वेगवार्त्तामाकर्ण्यो-

---

१. मन्युः शोकः । मन्युः शोके क्रतौ क्रुधि ।। इति कोषः ।
२. अञ्जसेति याथार्थ्येऽव्ययम् ।
३. वेत्तेर्लिङ्युत्तमैकवचने रूपम् ।
४. सृज विसर्गे इति दैवादिकादकर्मकाद्धातोरात्मनेपदिनो लङि रूपम् संसर्गमापदित्यर्थः ।
५. संपूर्वः ष्टुञ् स्तुतौ इति धातुः परिचयेऽर्थे वर्तते । संस्तुतः परिचितः । संस्तवः स्यात्परिचये इत्यमरश्च । पूर्वं संस्तुतः संस्तुतचरः । भूतपूर्वे चरट् इति चरट् प्रत्ययः ।

पाक्षिपत्—श्रूयते धर्मप्रियस्य जनस्य यथा गीताभ्यासेन मनस्तुष्यति न तथा ग्रन्थान्तरानुशीलनेन । अतस्ता अपि सादरं पठ्यन्तामिति । एवमुक्तः श्रीमोहनदासोऽभ्यजानात्[1] तातोऽपि मम गीता[2]स्व[3]धीती सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजेति श्लोकार्धमसकृदुदीरयिष्य[4]तीति । अतः सोऽप्युपनिषत्सारभूता गीताः परमादरेणाध्येतुमारभत । कालेनास्य चेतः समाधीयत ।

श्रीगान्धी लन्दननगरे तिस्रः समा व्यवहारशास्त्रमध्यैष्ट । प्रथममत्रभवान् तत्रत्यां प्रावेशिकीं परीक्षामुदतरत् । पश्चाद् इनर-टेम्पेल् इत्याख्ये महाविद्यालये धर्मसंहिता अधीत्य स उत्तरवादिपरीक्षाञ्चोदतरत् ।

उत्तरवादिपरीक्षोत्तरणं,

स्वदेशं प्रत्यागमनं

उत्तीर्णपरीक्षः प्राप्तोपाधिकश्च स स्वदेशं प्रत्यागमं संव्यधात् । संविधाय च प्रायात् । मुम्बापुर्यां यदा पोतादवातरत् तदा स परलोकान्तरितां मातरमश्रौषीत् । दारुणमेतं समाचारं निशम्य स वज्रताडित इवाभूत् । धर्मस्योपदेष्ट्रीं विनयस्य दात्रीं स्वस्य संवर्धयित्रीं प्रणयिनीं जननीमत्यन्तविलुप्तदर्शनां विदित्वा स शुचो वशमगात् । या मच्छिवं सततमनुध्यायन्ती मां चारित्र[5]मुपादिशत्, यस्या धर्मप्रवणताया उपयोगितामहं विदेशेऽन्वभूवम्, यस्याञ्च प्रोषितस्य मम श्रद्धा भक्तिश्चातिभूमिं गते, सा निधनं गतेति व्यदीर्यतास्य हृदयम् । अनिच्छन्नपि स पूर्वजस्य वचने स्थितो राजकोटं प्रत्ययात् ।

ज्यायान्भ्राता त्वेनं साक्षाद् राजकोटमनीत्वा पञ्चवटीमानयत् । अत्र समुद्रोल्लङ्घनेन प्रायश्चित्तिनः श्रीमोहनदासस्य परिशुद्धये

---

१. अभिपूर्वो जानातिः स्मरणेऽथ वर्तते ।
२. क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् इति कर्मणि सप्तमी ।
३. अधीतमनेनेति अधीती । इष्टादिभ्यश्चेति कर्तरीनिः ।
४. अभिज्ञावचने लृट् इत्यभ्यजानाद् इत्यभिज्ञावचन उपपदे उदीरयतेर्धातोर्भूते लृट् । यथा स्मरसि कृष्ण गोकुले वत्स्याम इत्यत्र ।
५. चरित्रमेव चारित्रम् । प्रज्ञादित्वात्स्वार्थेऽण् ।

पूर्वमेव सम्भारा अक्रियन्त । पुण्यप्रसन्नसलिलायां भागीरथ्यां कृताप्लावे[1] मन्त्रादिभिश्च पूतकाये श्रीमोहनदासे परःशता[2] विप्रा ज्ञातयश्चाभोज्यन्त । निर्वृत्ते शोधने स भ्रात्रा समं राजकोटमागात् । तत्र प्राप्तः शोकपरीतात्मा स लोकोत्तरं मातुश्चरितमनुचिन्तयन् द्वित्रान् दिवसान् विजनेऽनयत् । ततः स बुद्धावकरोत्—मातुरभावे जन्मभूरेव मातृबुद्ध्या शुश्रूषणीया, तेनैव चेतः समाधास्यत इति । एवं कृतसङ्कल्पः श्रीगान्धी स्वल्पेन समयेन विषादान्निरमुच्यत ।

अतीते कस्मिश्चित् काले श्रीगान्धी मुम्बापुरीं प्रत्यागमत् । तत्र च वासं परिकल्प्य विधिज्ञवृत्तिमुपाजीवत् । आदौ तु तस्य महती व्यापृतिर्नाभूत् । परं गच्छता कालेन तस्य व्यवहारपाण्डित्यं सर्वस्य विदितमभूत् । तेन नित्यं कार्यव्यग्रः स क्षणं[3] नालभत । प्रभूतञ्चार्थमार्जयत् । परं नात्मना व्यस्मयत न च लोलुपतामयात् । वादानुवादेन समर्थयिष्यामीत्यभ्युपेतमपि व्यवहारपदमसत्प्रतिष्ठमेतदिति ज्ञात्वा सोऽजहात् ।

एवं व्यापृतोऽपि श्रीगान्धी कुतश्चिद् विपश्चितो नित्यं हिन्दुशास्त्राण्यध्यगीष्ट पर्याप्तं व्युत्पत्तिं चालबध ॥

इत्युपाध्यायश्रीचारुदेवशास्त्रिणः कृतौ श्रीगांधीचरिते
प्रथमः परिच्छेदः ॥

---

१. कृताभिषेकः, कृतस्नानः । आप्लाव आप्लवः स्नानम् इत्यमरः । आङ्-पूर्वः प्लवतिः स्नानेऽर्थे वर्तते । अत एव स्नातक आप्लुतो व्रती इति च सः ।
२. शतात्परे परःशताः । पञ्चमी इति योगविभागात्समासः । राजदन्तादित्वात् शतशब्दस्य परनिपातः । पारस्करादित्वात्सुट् ।
३. क्षणो व्यापारशून्यत्वम् । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः इत्यमरः ।

# अथ द्वितीयः परिच्छेदः

सप्तचत्वारिंशदुत्तरनवशतोत्तरसहस्रतमे वैक्रमेऽब्दे दक्षिणाफ्रीकाभूखण्डे पञ्चदशलक्षप्राया[1] भरतवर्षीया न्यवसन्। एषां भूयांसस्तु नेटाल्-जनपदे वसतिमकुर्वन्। गौराङ्गाः[2] प्रजाः कृष्णाङ्गेभ्यो भरतवर्षीयेभ्योऽसूयवस्तान कुत्सयन् विविधं चाक्लिष्णन्। एवं हि तत्र वृद्धिं गतो वर्णविद्वेषो यदाढ्याश्चानाढ्याश्च, बहुज्ञाश्चाज्ञाश्च, विविधविद्यासु विनेतार उपाध्यायाश्च, नैगमाः[3] सांयात्रिकाः[4] पोतादीनामधीशितारश्च सर्वे कर्मकरा इति सावज्ञमहूयन्त। परमार्थत एषां बहिष्कार एव तासामभिमत आसीत्। इत्थं कदर्थिता मा जीवन्तः[5] परावज्ञादूनचेतस्का इमे प्रत्यवस्थानैकतानमनसोऽभूवन्[6]। परं नेतारमन्तरेण कार्यपदवीं नाबुधन्।

*दक्षिणाफ्रीकाभूखण्डे श्रीगान्धिनः समुद्योगः*

भरतदेशीयस्य कस्यचिदिभ्यस्यापरेण केनचित् सह प्रवृत्तं प्रिटोरिया इत्यत्राधिकरणे विचार्यमाणं व्यवहारं समर्थयितुं श्रीमोहनदासः पञ्चाशदुत्तरनवशतोत्तर-

*नेतुरागमः*

---

१. प्रायेण पञ्चदशलक्षमिति। सुप्सुपेति समासः।

२. गौरमङ्गं कलेवरं यासां ता गौराङ्गा गौराङ्ग्यश्च। अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति वा ङीष्।

३. नागरा वणिज इत्यर्थः। नागरो वणिग् नैगमौ द्वौ—इत्यमरः। वणिक्पथः पुरं वेदो निगमाः—इति च सः। निगमे भवः—नैगमः।

४. वहित्रगामिनो वणिज इत्यर्थः। सांयात्रिकः पोतवणिक्—इत्यमरः। संयात्रा द्वीपान्तरगमनं प्रयोजनमस्येति सांयात्रिकः। संपूर्वस्य यातेर्द्वीपान्तरगमने वृत्तिरित्याहुः।

५. माङ्याक्रोशे इति वक्तव्याल्लटः शत्रादेशः। गर्हितजीविनः सन्त इत्यर्थः।

६. प्रत्यवस्थाने विरोधे एकतानमेकाग्रं मन एषां ते। एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि—इत्यमरः।

प्रीकाभखण्डमापद्यत । व्यवहारस्य कृते वर्षं तत्रावस्थानं च प्रत्यजानीत । अत्रत्यां दशां प्रथममजानन्स क्रमशस्तां सम्यक् पर्यचैषीत् । आश्चर्यं च महदागमत् । नेटाल् इत्यत्र ट्रांस्वाल् इत्यत्र च कृष्णाङ्गप्रद्वेषात् सोधिकृतैर्गौराङ्गै रतिमात्रं न्यक्कृतोऽभूत्[1] । आवसथेभ्यो बहिष्कृतः, चलद्भ्यो लोहपथसंचारिभ्यो वाष्पयानेभ्यो भ्रंशितः, ताडितः पादेन प्रहृतश्च । आप्रीकानिवासेन निर्विद्य[2] वर्षान्ते ततः प्रतिष्ठासुः स डर्बन् इत्यत्र गतो भरतवर्षीयजनतया[3] सुष्ठु संभावितः । तत्र पुर्यां स वृत्तपत्रेष्वपाठीत् व्यवस्थापिकायां सभायामुपन्यासः प्रस्तोष्यते येन स्वीकृतेन भरतभूमिजानां निर्वाचनादिकर्मसु संमतिदानेऽधिकारो व्यावर्तिष्यते । प्रस्तोष्यन्ते चैवञ्जातीयकान्युपन्यासान्तराणीति । एवंविधेषु प्रस्तावेष्वधिकृतानां कीदृशोऽनुबन्धः[4] कीदृशश्च तैर्भरतभूमिजानामर्थोपनिपात इति स आप्रच्छनाय समेताञ्जनान् सम्यगावेदयत् तद्विरोधाय च तान् प्राचोदयत् । एवमुपस्थितां विपदं श्रुत्वा सर्वे डरबनस्था भरतदेशीया भवानिह कञ्चित्कालमवतिष्ठतामाश्रवांश्च[5] नस्तथा नयतां यथा वयं शोकं तरेमेति सप्रश्रयं प्रार्थयन्त । परदुःखमसहिष्णुः करुणया द्रुतचेता महात्मा तद्वचनमनुरुन्धानस्तत्रैव वस्तुं निरचिनोत् ।

व्यवहारविच्छ्रीगान्धी प्रस्तुतस्य प्रथमं व्यवहारविरुद्धतामुपपादयितुं प्रायस्यत् । ततः प्रार्थनापत्रादिकं बहुजनसमर्थितं न्यबध्नात् । असकृदकृतार्थतां गतः सोऽन्ते सिद्धिमापत् ।

---

१. न्यक्कृतः—अधःकृतः, तिरस्कृत इत्यर्थः । न्यङ्नीचखर्वह्रस्वाः स्युः—इत्यमरः ।

२. निर्विण्णो भूत्वा इत्यर्थः ।

३. जनानां समूहो जनता । ग्रामजनबन्धुभ्यस्तल् । तलन्तं स्त्रियाम् ।

४. अनुबन्धोऽभिप्रायः । तथा च मानवे धर्मशास्त्रे प्रयोगः—

अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः ।
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥

५. विधेयो विनयग्राही वचने स्थित आश्रवः—इत्यमरः ।

भरतभूमिजान् संहन्तुं श्रीगान्धी नेटाल्देशे इण्डियन् काङ्ग्रेस् इति समाजं प्राकल्पयत्। विदितवृत्तान्ताश्च ते यथा स्युस्तथा भरतवर्षीयमतमितिसंज्ञं साप्ताहिकं वृत्तपत्रमपि प्रावर्तयत्। शिक्षा-प्रणेत्रीं संसदं चाकरोत्।

कष्टश्रिता[1] अपकर्तारोऽप्युपकर्तव्या इति मते स्थितस्तत्रभवान् गान्धी पञ्चाशदुत्तरनवशतोत्तरसहस्रतमे संवत्सरे बूर्जातीयैरायोधने सेवकदलं निर्मायाऽऽङ्ग्लानां महत् साहायकं व्यधात्।

भयावहेऽस्मिन्नाहवेऽशनायापिपासे अवगणय्य स्वेच्छासेवका अनारतमसेवन्त। प्रत्यहं ते परिक्षताञ्शतशो योधान् सार्धत्रये क्रोशेऽवस्थितमातुरालयं स्कन्धेनावहन्। व्रणशोधनं पट्टिकावेष्टनं चाकुर्वन्।

एकस्मिन्नहनि सेनापतिर्वापेटः श्रीगान्धिनमुपेत्य ससम्भ्रममिदम-वोचत्-महाभाग यदि सद्यःक्षताः सैन्याः समराङ्गणादानाय्य क्वचि-न्निरुप्लवे प्रदेशे निधीयेरंस्तर्हि महदुपकृता भविष्याम इति। एतदा-कर्ण्य श्रीगान्धी तथैवाचर्यतामिति स्वानुगानाज्ञापयत्। आज्ञप्तास्ते-ऽग्निवर्षं वर्षत्सु तुमुलं संग्रामयमाणेषु[2] सैनिकेषु मृत्युं तृणाय मत्वा क्षतविक्षतानामुद्दिधीर्षया श्रीगान्धिनमनु समराङ्गणं प्रति प्राद्रवन्। एवं श्रीगान्धिनाधिष्ठितास्ते तत्र दिवसे यत्साहसिक्यं यं मतिविभवं यां कर्तव्यपरतां च प्रादर्शयंस्तदैतिह्यपत्रेषु कार्तस्वर[3]रसेन न्यस्ताक्षरं भविष्यति।

निष्ठिते बूर्समाघाते[4] श्रीगान्धीत्थमचिन्तयत्—सम्प्रति दक्षिणा-फ्रीकायां मेऽवस्थित्या नास्ति कश्चिदर्थः। स्वदेशोपकृतौ तु शक्य

---

१. कष्टं श्रिताः कष्टश्रिताः। द्वितीया श्रितातीतेत्यादिना समासः।
२. संग्राम युद्धे इति चौरादिकादनुदात्तेतो धातोः शानचि रूपम्।
३. कार्तस्वरं स्वर्णम्। रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् इति स्वर्णनामस्वमरः।
४. समाघातो युद्धम्। अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः इति युद्धनामस्वमरः।

आत्मा व्यापारयितुम् । आफ्रीकास्थोऽहं यद्यपि विभवानि स्वदेशजान् शुश्रूषितुं तथापीहावस्थानेनार्थार्जनमेव मे परमं मनीषितं मा भूदिति मया स्वदेशाय गमनीयमिति ।

एवं सम्प्रधार्य श्रीगान्धी प्रयाणाय[1] समनह्यत । परं नैतल्लोकोऽन्वरुध्यत । निर्बध्यमान[2]स्त्वेवमन्वमन्यत—वर्षाभ्यन्तरे सत्यामपेक्षायां यदि भवान् दक्षिणाफ्रीकां प्रत्यावर्तितुमभ्युपैति तदा गन्तुमर्हतीति । एवमनुमतगमनस्य श्रीगान्धिन आप्रच्छनाय समेता नेटाल्वास्तव्या भरतभूमिजा अर्घ्यस्या[3]स्य महतीमर्हणामकुर्वन् । बह्वीर्महार्घाश्चोपदा[4] अस्मै व्यतरन् । चामीकराणि घटिकायन्त्राणि मणिमयान्यङ्गुलीयकानि महार्हाणि वस्त्वन्तराणि च सोपचारं प्रादिशन् । श्रीकस्तूरबाईमुद्दिश्य मुक्ताकलापमप्येकमुपाहरन् ।

यत्र प्रदोषे श्रीगान्धी प्रीतिदायानिमानाप्नोत् तां दोषां स उन्मत्त इवोन्निद्रमनयत् । इतश्चेतश्च पर्यटत् । इतिकर्तव्यतामूढश्चाभवत् । शतशो रूप्यकाणां प्राभृतस्यानङ्गीकारः कष्टः, अङ्गीकारस्तु कष्टतरः प्रत्यभात् ।

बहु विमृशतः श्रीगान्धिनो बुद्धिरभवत्—नाहमेतद्वस्तुजातं स्वपार्श्वे निधित्स इति । एवं सति श्रेष्ठिरुस्तमजिप्रभृतिष्वाभरणानि न्यस्य तानुद्दिश्य पत्रमेकं न्यबध्नात् । अन्येद्युः प्रगे पुत्रकलत्रादिभिः संमन्त्र्य भारस्य लघूकरणं च निरचिनोत् ।

व्युष्टायां रजन्यां पित्रानुयुक्ताः पुत्राः प्रत्यब्रुवन्—एभिराभरणैर्नं नोऽस्ति कार्यम् । अतः सर्वोऽयं वस्तुसन्दोहः पराकरणीयः प्रत्यर्पणीयश्च । अथ भविष्यति किमिति स्वयं निर्मातुं न प्रभविष्याम इति । एतदाकर्ण्य पिता प्रासीदत्, अपृच्छच्च मातरमपि वः प्रबोधयिष्यध्वे

---

१. क्रियाग्रहणमपि कर्तव्यम् इति सम्प्रदानत्वाच्चतुर्थी ।
२. पुनः पुनरभ्यर्थ्यमान इत्यर्थः ।
३. मूल्ये पूजाविधावर्घः—इत्यमरः । अर्घमर्हतीत्यर्घ्यः । दण्डादित्वाद्यः ।
४. उपायनमुपग्राह्यमुपहारस्तथोपदा—इत्यमरः ।

न वेति । बाढं प्रबोधयिष्यामः । एतद्धि सुकरम् । नहि साऽऽभरणान्यामुञ्चति । रिरक्षेच्चेदस्मदर्थमेव तानि रक्षितानि स्युः । परं नैतानि वयमपेक्षामह इति कुतः साऽग्रहं ग्रहीष्यतीति ।

परं दुर्लभो दयिताया अनुनयोऽभूत् । पृष्टा सा प्रत्यवादीत्—त्वं नापेक्षेथाः, कुमारा अपि नापेक्षेरन् । किं तेन । पेलवधियो बाला यथा बोध्यन्ते तथा गृह्णन्ति । अहं यद्यपि नानुज्ञातास्म्येतानि धारयाणीति, वध्वस्तु धारयिष्यन्त्येव । कश्च तदद्धा[1] वेद यच्छ्वो भविता । प्रीतिदायानामेतेषां प्रत्यावर्तनं न जाघटीति । एव लपन्ती सा भृशमरोदीत् । परं कुमारा नेषदपि व्यचलन् किमङ्ग[2] धैर्यधनो मोहनः ।

स प्रत्यभाषिष्ट यदा कुमारा दारान् परिग्रहीष्यन्ति तदालङ्करणसंविधानं विचारगोचरतां गमिष्यति । न चैतान् कौमारके परिणाययितुमिच्छामः । यूनां सतां त्वेषामस्मिन्विषये कामचारः । अन्यच्च । किमस्माभिराभरणवल्लभाः प्रसाधनप्रिया एषां कृते प्रार्थनीयाः कन्यकाः । निर्मित्सिष्यतेऽपि चेत्किञ्चिद् ध्रियेऽहमिति[3] ।

साधु ब्रवीषि । अवैमि त्वाम् । स एव खल्वसि येन ममाप्यलङ्करणानि गात्रादवतारितानि । अहमाभरणानि बिभृयामिति नानुजानासि । स्नुषास्त्ववश्यमनुज्ञास्यसि । बालांस्त्वद्यत एव विरक्तांश्चिकीर्षसि । अवश्यं मयौपहारिकप्रत्यर्पणं[4] विरोद्धव्यम् । किं च । मम मौक्तिकसरे[5] कीदृशस्तवाधिकार इति प्रेयस्कामा श्रीकस्तूरबाईः स्माह ।

---

१. तत्त्वे त्वद्धाञ्जसा द्वयम्—इत्यमरः ।

२. किंपुनरित्यर्थः ।

क्षिप्रे च पुनरर्थे च संगमासूययोस्तथा ।
हर्षे संबोधने चैव ह्यङ्गशब्दः प्रयुज्यते ।।

३. धृङ् अवस्थाने इति धातोर्लट् ।

४. उपहाराणां समूह औपहारिकम् । अचित्तहस्तिधेनोष्ठक् ।

५. मुक्ता एव मौक्तिकम् । विनयादिभ्यष्ठक् इति स्वार्थे ठक् । स्वार्थिकाः

किमेष मत्सेवानिमित्तं त्वयालाभि स्वसेवानिमित्तं वेति श्रीगान्धी दृढमप्राक्षीत् ।

अस्तु तत्तथाऽन्यथा वा । किं त्वदीयायां सेवायां ममाङ्गभावो नास्ति । यन्मां रात्रिन्दिवं परिश्रमयसि सा सेवा न भवति किम् । यच्च मां रोदं रोदं परान् पामरान्गृहेऽरक्षः, मां च सेवामकारयस्तद-किञ्चित्करं किमित्युदीर्य सा वाचंयमाऽभूत् ।

श्रीगान्धी तु प्रथमत एवावश्यं मयाऽलङ्करणानि प्रत्यर्पणीयानीति कृतसंकल्प आसीत् । अतोऽरुन्तुदाः प्रियाया इमा गिरः श्रुत्वापि निश्चयं नाहारयत् । न्यासाधिकृतेषु चेमान्यलङ्करणानि न्यस्य पुत्र-कलत्रादिभिः समेतो भरतवर्षं प्रति प्रायात् ।

स्वदेशं प्रत्यावृत्तिः, आप्रीकां प्रत्यागमश्च

स्वदेशं प्रत्यावृत्तः श्रीगान्धी कञ्चित्कालमितस्ततोऽभ्रमत । अष्ट-पञ्चाशदुत्तरनवशतोत्तरसहस्रतमे वत्सरे सहस्ये मासि कलिकातानगर्यां मिलितायां काङ्ग्रेसपर्षद्युपास्थित । मासमेकं च श्रीगोखलेमहोदयस्य सविधेऽवास्थित । अन्ततः पर्यटनाद्विरम्य यावन्मुम्बापुर्यामवस्थातुं निरचैषीत् तावदाप्रीकात इमां विद्युद्वार्तामवापत् —उपनिवेशमन्त्रीहायाति । अतस्त्वरितमागन्तव्यमिति । सत्यसङ्गरः श्रीगान्धी कार्यजातं संहृत्यावलम्बितं ततः प्रास्थित । यथासमयं डर्बन् इत्यत्र चागात् ।

आगतः श्रीगान्धी प्रतिनिधिमण्डलेनैकेन श्रीचेम्बरलेनमहोदया उपसर्पणीया इति प्रास्तावीत् । ततः स भवान् पौषकृष्णाष्टम्यां प्रिटोरिया इत्यत्र प्रापत् । अदर्शच्च ट्रांस्वाल्वासिनो बलवद्बाधितान् । परिणतिं भजति बूर्प्रधने प्रतिष्ठां गते चाङ्गले शासने ट्रांस्वाल् इत्य-त्रापूर्वः परिवर्तः कश्चनाभूत्—भरतदेशजा नागरका[1] इति नागण्यन्त ।

---

क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपीति नपुंसकत्वम् ।

१. नगरात् कुत्सनप्रावीण्ययोः इति वुञ् । प्रवीणा नागरा इत्यर्थः ।

भूम्यादिधनक्रये च तेषां याथाकमी[1] नावर्तत। स्वास्थ्यस्य हेतोर्जल-वातयोर्दोषाशङ्कया चाङ्गलवसतेरुपकण्ठे वस्तुं च नान्वज्ञायन्तेति। विविधं व्यथिता विपज्जालमुत्प्रेक्षमाणाः प्रतीकारे चाप्रगल्भमानास्त-त्रत्या भरतभूमिजाः तत्सारथ्यमपेक्षमाणाः महात्मानं तत्र स्थितिं प्रार्थयन्त। एवं सति परोपकृतिप्रियः श्रीगान्धी योहन्नसबर्ग इत्यत्र विधिज्ञवृत्तिमुपाश्रित्य न्यवसत्।

षष्ट्युत्तरनवशतोत्तरसहस्रतमे वत्सरे योहन्नसबर्ग इति नगरं महामार्याऽऽक्रान्तम्। तस्मिन्नवसरे श्रीगान्धिनाऽऽतुरालयः प्रवर्तितः। भरतदेशजाध्युषितेषु[2] प्रदेशेषु संमार्जनप्रोक्षाणदेरभावा-न्मलस्यावकरस्य दौर्गन्ध्यस्य चातिरेकं हेतुमाश्रित्य महामारी तत्रैव स्वं भीषणमात्मानमाधायाजृम्भत। नगरेऽधिकृता गौराङ्गाश्च न तत्रावधानमदधुः। परं श्रीगान्धी तत्सहायाश्च महता प्रयत्नेन विसृमरमातङ्कं[3] प्रशममनयन्।

फिनिक्साश्रम-प्रतिष्ठा

नगरसंराव[4]रहितेऽकृतकरामणीयकनिधाने कस्मिंश्चिद् ग्रामे भरतवर्षीयैः संवसन्नहमभ्युदयनिःश्रेयसयोरनुगुणं[5] किमपि कर्म कुर्यामिति चिररात्रायोदकण्ठत श्रीमोहनः। अतो डर्बनाधिष्ठानस्य नातिदूरे कृषिप्रधानां वसतिमेकां प्राकल्पयत्। तत्र भरतभूमिजैराङ्गलैश्च कैश्चित्सुहृद्भिः सह वस्तुमारभत। ततो विप्रकृता[6] उच्चावचान्नि-

---

१. यथाकामंभावः याथाकाम्यम्। स्त्रियां ङीषि याथाकामी।

२. उपान्वध्याङ्वसः इत्यधिपूर्वस्य वसतेरधिकरणस्य कर्मसंज्ञायां कर्मणि क्तः।

३. विसारिणम्। सृघस्यदो क्मरच्।

४. संरावः शब्दः। उपसर्गे रुवः इति घञ्।

५. नितरां श्रेयो निःश्रेयसम्। मोक्ष इत्यर्थः। अचतुरविचतुर—इत्यादिना निपातितम्।

६. विप्रकृतोऽपकृतः। पीडित इत्यर्थः। तस्मिन्विप्रकृताः काले तारकेण दिवौ-कसः इत्यत्र कुमारे विप्रकृता उपप्लुता इति मल्लिनाथः।

कारॉंल्लम्भिता[1] गौराङ्गनियोज्यतानिरक्ता[2] बहवो भरतखण्डजा एतमाश्रमं प्रापद्यन्त। स्वाधीनवृत्तयोऽपि केचित् श्रेयस्कामास्तत्र वसतिमरोचयन्।

आश्रमं प्रविविक्षुभिर्ये नियमा अनुवर्त्यास्तेऽत्र संक्षिप्य विन्यस्यन्ते। तद्यथा—

आश्रमस्थः सर्वो जनः प्रतिमासं पञ्चचत्वारिंशतो रूप्यकेभ्योऽतिरिक्तं न व्यययेत्। कृषिद्वारकश्च यो लाभः स्यात्स सर्वेषां समभिष्यात्[3]। संविभागे वैषम्यं मा भूत्।

इह सर्वो जनोऽन्योन्यमात्मवत्पश्येत्। अयमभिजातः, अयं प्राकृत[4] इति भेदबुद्धिं परिहरेदिति।

अत्राश्रमे सर्वे नियतकालं प्रत्यहं पर्यश्राम्यन्। केचिद्भुवमकृषन्, अन्ये बीजान्यवपन्, इतरे केदारॉंल्लवित्वा शस्यसङ्ग्रहं चातपे शोषयित्वाऽऽश्रमे समभरन्। धूर्वहः[5] श्रीगान्धी स्वयमपि चतस्रो होराः क्षेत्रेषु प्रत्यहं पर्यश्रमत्। स्वानुगैः सर्वैः समेतस्तत्रभवान् ध्यानावस्थित उभे सन्ध्ये उपासिष्ट। कृतोपासनः सर्वैः समं सात्त्विकं सामान्यं च भोज्यमभुक्त। कश्चित्कालं नियोगतोऽध्यगीष्ट। आश्रमस्थांश्च धर्ममन्वशिषत्। होराचतुष्टयमेव च नियमतोऽस्वाप्सीत्।

---

१. निकारो निकृष्टीकरणम्। निकारः स्यात्परिभवे धान्यस्योत्क्षेपणेऽपि च—इति धरणिः।

२. प्रैष्यभाव इत्यर्थः। नियोज्यकिङ्करप्रैष्यभुजिष्यपरिचारकाः—इत्यमरः।

३. अभिरभागे इति भागवर्जितेऽर्थेऽभेः कर्मप्रवचनीयतान्यत्र तूपसर्गसंज्ञा। तेन भागार्थस्येह विवक्षितत्वादुपसर्गसंज्ञायामुपसर्गप्रादुर्भ्यामस्तिर्यच्परः इति षत्वम्।

४. नीच इत्यर्थः। विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः—इत्यमरः।

५. धुरन्धर इत्यर्थः। वहतीति वहः। पचाद्यच्। धुरो वहः धूर्वहः। धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धराः—इत्यमरः। अत्र तु गौण्या वृत्त्या नायक इत्यर्थः।

अकृतविद्याः प्रायेणापरिशीलितसाहित्या वृत्तपत्रेषु विरसवृत्तयो भरतवर्षीयाः प्रजा महात्मना प्रवर्तितं वार्तापत्रं नाद्रियन्त। तेन तत्रभवान् प्रथमाब्दान्ते त्रिंशत्सहस्रं रूप्यकानलाभं व्यषहत।

योहन्नसबर्गं इत्यत्रोत्तरवादिवृत्तिमुपजीवन् श्रीगान्धी प्रतिवर्षं पञ्चाशत्सहस्रं षष्टिसहस्रं वा रूप्यकानार्जयत्। इदानीमात्मान-मुद्धर्तुकामः स भवान् दारिद्र्यं स्पृहयन्सर्वमेतं महान्तमायं विहायापरिग्रहो'ऽभूत्।

विंशतिं वर्षाणि भरतभूमिजानां श्रीगान्धिनानुशिष्टानां समुद्योगः प्रावर्तिष्ट। परं त्रिशष्ट्युत्तरनवशतोत्तरसहस्रतमात्संवत्सरादारभ्य सप्तत्युत्तरनवशतोत्तरसहस्रतमं संवत्सरं[2] यावदयं परं प्रपञ्चितो वेगितश्चाभूत्।

द्वाषष्ट्युत्तरनवशतोत्तरसहस्रतमे विक्रमाब्दे दक्षिणाफ्रीकाशासना-धिकृतैरपरं विधानं व्यरचि—दक्षिणाफ्रीकाभुवमधिवसद्भिः सर्वैर्भरतवर्षीयैराबालं स्वं नाम राजकीयपत्रेषु लेखनीयम्। स्वनाम-धेयविन्यासस्य सविधेऽङ्गुष्ठचिह्नमपि देयमिति। अस्य विधेरभिप्रेतं तु भरतवर्षीयाणां सङ्ख्या क्रमशो ह्रासमापद्येतेत्येवासीत्।

इदं विधानं सम्यग्विरोद्धुं श्रीगान्धी नेटाल् इत्यत्र महतीं सभामकारयत्। तत्र परःसहस्रान्समुपस्थितान् सभ्यान् संबोध्य भाववतीमोजस्विनीं च वाचमवादीद् यस्या अयं संक्षेपः—

'प्रियबान्धवाः। आत्मसंमानं गोपायितुं चरितोत्कर्षं चोपपादयितुं

---

१. निःस्व इत्यर्थः।

२. द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते इति कारिकायां ततोऽन्यत्रापि दृश्यते इति वचनप्रामाण्याद्यावद्योगे द्वितीया।

३. राज्ञ इदं राजकीयम्। राज्ञः क च इत्यनेन कोऽन्तादेशः। छप्रत्ययस्तु-वृद्धत्वात्सिद्धः।

सत्याग्रहादृते[1] नास्ति साधनान्तरम् । कोऽयं सत्याग्रहो नाम पदार्थः । यतो युष्मासु मध्ये बहवः सत्याग्रहस्वरूपं न परिचिन्वन्त्यतस्तदिह समासतोऽनुशास्मि—

सत्याग्रह आत्मबले प्रतितिष्ठति । आत्मबलमिति विदितोऽयमर्थः । आत्मनो बलमात्मबलमिति हि प्रतीतिः । आत्मा सत्यश्चिद्रूपश्च । शरीरमसत्यमचेतनं च । अत आत्मबलमजय्यं[2] नित्यं च । शरीरस्य तु बलं महीयसा शक्त्यन्तरेण शस्त्रैः सैन्यैश्च विजेतुं ध्वंसयितुं वा पार्यते । सत्याग्रह एवंरूपस्यात्मबलस्य विजृम्भणप्रकारः । सत्याग्रही यद्यपि शत्रुं न कदर्थयति नतरां शातयति[3] तथापि हेलया शारीरं बलं पराभवति । अत्रत्या राज्याधिकारिणोऽस्माननभिजातान् पृथग्जनान् वा मन्यमाना नो निर्वासयितुमनसोऽहन्यहनि नूतनानि विधानानि विरचयन्ति । एतानि विधानान्यननुविधाय सत्याग्रहेण स्वं वीर्यं प्रख्यापनीयम्[4] । नूतनविधाननिर्मित्सेति रुजा राजपुरुषाणाम् । यदि वयं नैतानि विरोत्स्यामोऽपि तु विधेयतयानुवर्त्स्यामः तदा वयमिह स्वावस्थानमत्यन्तं विलोप्स्यामः । अतः क्रूरा इमे राज्याधिकृताः स्पष्टमिदमावेदनीयाः—यावदच्छिन्नं नः शिरस्तावद्वयं नेमामवधीरणां सहिष्यामहे । अतो यद्येतद्विधानानविधायित्व-

---

१. सत्ये आग्रहोऽभिनिवेश इति पदार्थः । महात्मप्रवरेण श्रीगान्धिना त्वयं शब्दोऽर्थविशेषे परिभाषितः । इदं हि तत्रभवाननेन शब्देनाभिधित्सते—स्वपक्षः सत्यः परपक्षश्चासत्य इत्यवधार्य परेण क्रियमाणा बलात्कृतयो विरोद्धव्याः, बलीयसोऽपि तस्याज्ञा न मानयितव्याः । तेन निपात्यमान उग्रोऽपि दण्डः सहर्षं सोढव्यः । परं स न मनागपि विप्रकार्य इति ।

२. क्षय्यजय्यौ शक्यार्थे इति निपातितम् । जेतुं न शक्यत इत्यजय्यम् ।

३. शदेरगतौ तः इति शदेर्दकारस्य तकारादेशः । शातयति निषूदयति ।

४. णेर्विभाषा इत्यनेन कृत्यचः इति नित्यं प्राप्तम् णत्वं विकल्प्यते । तेन पक्षे प्रख्यापणीयमिति भवति । पक्षान्तरे प्रख्यापनीयम् इति ।

५. विधेयता विनयग्राहिता । विधेयो विनयग्राही वचने स्थित आश्रवः—इत्यमरः ।

मस्माकमिष्यते तर्ह्येतत्प्रथमं कर्तनीयम् । दक्षिणाप्रीकाशासकैः प्रस्तुतान्येवञ्जातीयकानि विधानानि साम्राज्यसभयाभिनन्दितान्यपि नास्माभिरनुविधास्यन्ते । एवमननुविदधानान्नो यथेष्टं दण्डयत । वयं सर्वं सोढुं सज्जाः । कारायां यदि निक्षेप्स्यामहे तत्रैव स्वर्गबुद्ध्या सुखं वत्स्यामः । यदि शूलमारोपयिष्यामहे तर्हि यत्स्वर्गाधिरोहिणीति[1] सस्मितं सहर्षञ्चाधिरोक्ष्यामः । यौष्माकीणानि विधानान्यनाद्रियमाणा अपि वयं न युष्माकं लोमापि मापयिष्यामः[2] इति । यदि भवन्तो मन्निर्दिष्टया दिशा कार्ये प्रवर्त्स्यन्ति तर्हि नियतो जय' इत्युक्त्वा व्यरमन्महात्मा ।

एवमनुशिष्टाः सर्वे समुपस्थिता जना महात्मनो वशंवदतां[3] गता राजकीयेषु पत्रेषु स्वनामधेयस्याङ्कनमवादीधरन् । एवं कुर्वाणास्ते कारावासं प्राणव्ययं वा नाजीगणन् । अनेके स्त्रीपुंसाः[4] सुकुमाराः कुमाराश्च कारावासमलभन्त । एवं क्षुभिते सर्वस्मिन्देशे महात्माप्यभियुक्तः सन्कारावासं लम्भितः । अभियोगान्तरे[5] स एवं स्पष्टमवादीत्—अत्रत्या भरतभूमिजा मयैवोपदिष्टाः सत्याग्रहम् । मद्वचने स्थिताः सर्वे इमे राजकीयशासनमवधीरयन्ति । अतो यः कश्चिद्दण्डो मयि प्रणेष्यते तमहं मनःप्रसादेन सहिष्य इति ।

शासितार इमं प्रजानामुद्योगं दुःखसहनशक्तिं च समीक्ष्य परं विस्मयमापन् । मासत्रयं यावत्त इदं विधानं न्यवर्तयन् । जेन्रल्[6]

---

१. निःश्रेणिस्त्वधिरोहिणी—इत्यमरः ।

२. हिंसिष्यामः । मीञ् हिंसायाम् इति क्रैयादिकाद्धातोर्णिचि लृटि रूपम् ।

३. प्रियवशे वदः खच् इति खच् । खचि मुमागमः ।

४. स्त्रियः पुमांश्च । अचतुरविचतुरसुचतुर—इति निपातितो द्वन्द्वः ।

५. अन्तरमवसरः ।

> अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये ।
> छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि ।।

६. जेन्रल् इति सेनानीवचन आङ्गलभाषाविन्यासः ।

स्मट्स् इतिनामा कश्चित्प्रख्यातोऽधिकारी महात्मानं संगत्येदम-वोचत्—यदि भरतवर्षीयाः स्वेच्छयैव राजकीयेषु कार्यालयेषु संनिधाय स्वं स्वं नाम लेखयेयुस्तर्हि तत्कालं विधानमिदं निरा-करिष्यत इति। सरलचेता महात्मा तदुक्तौ व्यश्वसीत्। तथाचरणे च स्वदेशीयान् प्रैरयत्। सर्वप्रथमं स्वं नाम लेखयितुं महात्मा राजकीयकार्यालयमयासीत्।

महात्मनस्ताडना

कश्चिदुद्यानाभिजनो[1] ऽसहनो मुहम्मदीयस्तदानीं सत्याग्रहव्रत-मनुपालयन् राजभयादेव महात्मेदमाचिचरिषुरिति मन्यमानस्त्रिचतुरैः[2] सहायैरागत्य महात्मानं बलवदताडयत्। एवं प्रहृतः स निःसंज्ञोऽभूत्, पथि च निःसहं विपर्यस्तः। तस्मिन्काले मुखान्मूर्ध्नश्चा-स्यासृक् प्रावहत्। पथा संचरमाणाभ्यां[3] द्वाभ्यामाङ्ग्लाभ्यामनुक्रो-शबुद्ध्यावेक्षितः। संनिकृष्टं जे-जे-डोक् इत्याख्यस्य ख्रिस्तप्रचार-कस्य गृहं नीतश्च। डोक्महाशयस्य धर्मप्रियया पत्न्या सयत्नमुप-चरितः। संज्ञां प्रत्यापद्य स रुधिरदिग्धाङ्गोऽपि कार्यालयं गन्तुमुन्मना अभूत्। वार्यमाणोऽपि तस्मा एव प्रदेशाया[4]त्वरत स्वं नाम लेखयित्वा च प्रत्यावर्तत।

एतमुदन्तं विदित्वाऽपरांश्च कांश्चित्तत्कर्मणि संनद्धानवगत्य महात्मनोऽनुगाः केचन तत्सकाशमित्वेत्थमवादिषुः—अद्यत्वे जाग-रूकेण[5] भवता भवितव्यमिति। एतन्निशम्य महात्मा प्रत्यवोचत्

---

१. सम्प्रति लोकेऽफगानिस्तान् इति प्रसिद्धस्य जनपदस्योद्यानमिति पुरातनं नामेति ऐतिह्यविदः।

२. त्रयो वा चत्वारो वा त्रिचतुराः। त्र्युपाभ्यां चतुरोऽजिष्यत इति डचो-ऽपवादोऽच्।

३. समस्तृतीयायुक्तात् इति तङ्।

४. क्रियार्थोपपदस्य च कर्मणि स्थानिनः इति चतुर्थी। प्रदेशमधिगन्तुमित्यर्थः।

५. जागरूको जागरिता। जागरूकः इति जागर्तेरूकः।

कथं नैतत्स्यात्, तेऽपि ह्रीदं मे कलेवरं कयाचित्कलयाधोशते नाम। यद्यहं स्वदेशीयानां समक्षं संनिधानाद् बिभीयां, मयाऽवलम्बितं नेतूपदमुत्स्रष्टव्यम्। येषां परिचर्यां मम व्रतं तेभ्यो भीत्वा तद्विषये जागृयां दूरतो वाऽवतिष्ठेय ततो मत्तो भीरुतर इह संसारे कः स्यात्। यः स्वदेशीयेभ्यस्ताडनां लभते स हि महाभागः। अन्यच्च। मदीये देशोपकरणे किञ्चिद्वैगुण्यं[1] वा ते पश्यन्ति, अत एव मां दण्डयितुमीहन्ते। इह किमन्याय्यम्। कथमहं तान् दूषयेयमिति।

राजप्रतिज्ञाभङ्गः

प्रतिज्ञापालनावसरो यावत्समायाति तावदुच्चैरधिकारिणो गत्वा महात्मा सप्रश्रयं निवेदयति, जेन्रल् स्मट्स् इत्यस्य प्रतिश्रवं च स्मारयति। परं नैते तदवदधते। एवमवस्थिते सर्वे भरतवर्षीयाः सधनाश्चाधनाश्च विद्वांसश्चाऽविद्वांसश्च, स्त्रियश्च पुरुषाश्च, प्रगल्भवयसश्चाऽप्रगल्भवयसश्च[2] विधानं विरुन्धाना अङ्गुष्ठच्छामुद्रयमाणाः कारासु निक्षिप्ताः। केचित् स्वाः प्रिया अवशं व्यरहयन्। अपरे जरतीर्मातॄर्व्यजहुः। इतरे ऽबोधाँल्लालनीयांस्तनूजान् समत्यजन्। सर्वेषां परस्परेण वियुज्यमानानां नेत्राभ्यामानन्दजं वारि प्रास्रवत्।

ट्रांस्वाल् इत्यस्मिञ्जनपदे भरतवर्षीयाणामष्टसहस्र्याः[3] पञ्चसहस्री खल्वस्य विरोधस्य हेतोः कारावासयन्त्रणामन्वभूत्। परं कष्टानुभवो व्रतभङ्गाय नाकल्पत। अत्रान्तरे महात्मापि द्विद्वौ मासौ[4] कारागारे निक्षिप्तः।

---

१. वैगुण्यं वैकल्यम् असम्पूर्णता।
२. प्रगल्भवया युवा। तथा हि गुरुः प्रगल्भेऽपि वयस्यतोऽस्याः इत्यत्र कुमारे प्रगल्भं वय इत्यनेन यौवनमुक्तम्॥
३. अष्टौ सहस्राणि समाहृतानि इत्यष्टसहस्री। अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः इति स्त्रीत्वे द्विगोः इति ङीप्।
४. अत्यन्तसंयोगे द्वितीया।

संकुचितेषु त्रिष्वगारेषु पञ्चविंशत्या मनुष्यैः सह महात्मा कारायां कालमत्यवाहयत् निकृष्टं हेयं च भोज्यं

कारावासः

प्रसन्नमना अभुङ्क्त। कठोरं कारावासं लम्भितः स प्रत्यहं नव होराः पर्यश्राम्यत्। प्रथमे दिवस इतरैस्त्रिशता भरतदेशीयैः सहैकस्य भूखण्डस्य समीकरण उत्खनने च नियुक्तः। तत्रोद्यानं चिकीर्षितमासीत्। इदं कार्य[1]मपरिशीलितपूर्वी[2] स भूभागस्य पारुष्याददो दुष्करममन्यत। काराया इदं स्थानं सार्धसप्त[3] क्रोशाः[4]। रविरतितीक्ष्णमतपत्। अचिरेणैव कालेन सोऽक्लाम्यत्। परं झटिति पुनः कार्यमारभत। इत्थं कानिचिदहानि स इदमेव कर्माकार्षीत्। अत्रान्तरे कञ्चित्कालं मालाकारकृत्यमपि महात्मान्वतिष्ठत्। सरस्या उत्खननेऽपि व्यापार्यत। तत्र भुवमुदखनत्। मृदमुदचिनोत्। उच्चित्य च देशान्तरमवहत्। इदमपि न सुकरमासीत्। एवं तस्य मणिबन्धनं व्रणितमभूत्। परं स कर्मासक्तिं नाहासीत्। अस्यैवंविधस्य दिनकृत्यस्यावसाने प्रत्येकस्मा[5]दागारात् प्रस्रावभाजनस्य हस्ताभ्यामादाय बहिःप्रापणमपि कृत्यमासीत्। विजितमनोग्लानिर्महात्मप्रवरः श्रीगान्धीदं यथादेशमचारीत्। कदाचित् स विट्शरगस्य[6] संमार्जनमपि काराया अधिष्ठात्रादिष्टः

---

१. अत्रानुक्ते कर्मणि तद्धितयोगात् षष्ठी न भवति। कृद्योगे तस्या विहितत्वात्।

२. पूर्वं परिशीलितमनेनेति परिशीलितपूर्वी। स न भवतीति। सपूर्वाच्च इत्यनेन इनिः।

३. अर्धेन सह वर्तमाना सार्धाः। सार्धाश्च ते सप्त च।

४. तद्युक्तादध्वनः प्रथमासप्तम्यौ—इति प्रथमा। गवीधुमतः साङ्काश्यं चत्वारि योजनानि—इत्यत्र यथा।

५. नाव्ययीभावादतोऽम्त्वपञ्चम्याः इति पञ्चम्याः पर्युदस्तत्वादसत्यमादेशेऽसति च सुब्लुकि विभक्तिः श्रूयते।

६. अद्यत्वे पौराः प्रायेणोच्चारायारण्यं नाश्रयन्तेऽपि तु तदर्थासु शालासूच्चरन्ति। एतदर्था शालेह विट्शरणमुक्तम्। शश्छोऽटि इति च्छत्वस्य विकल्पितत्वादत्र तदभावः।

स्वयमकार्षीत् । तत्र कारायां निवसन्महात्मा फिनिक्सतो विद्युद्वार्तामध्यगमत् । यथा स इदमबोधि —

मम धर्मदारा[1] इदानीमासन्नमरणाः । अतो मया तत्राह्वाय गन्तव्यमिति । त्वं धनदण्डं दत्त्वा जिगमिषसि न वेति काराधिष्ठात्रानुयुक्तो महात्मा दमस्य दानं तु नितान्तमसंभवि । औरसैः[2] संनिकृष्टैर्बन्धुभिश्च वियोगोऽपि सत्याग्रहेऽन्तर्भवतीति न्यगादीत् । एवमवस्थिते स प्रियान् दारानुद्दिश्य पत्रलेखनमयाचीत् । गौर्ज्यां भाषया पत्रार्थं उपनिबन्धनीय इत्युक्ते सति तदपि न प्राहिणोत्[3] ।

कारायां मुक्तो महात्मा स्वपक्ष्यान् संग्रहीतुमाङ्गलदेशमगमत् । तत्र दक्षिणाप्रीकास्थानां भरतवर्षीयाणां व्यसनौघ[4]मप्रथयत् । शासकानां बलात्कारांश्चाबोधयत् । महात्मनो वर्णनया प्रयुक्ता आङ्गला भरतभूमिजानां पक्षमपुष्यन् । शासितॄंश्च बलवदनिन्दन् । तेषां मध्ये बहवोऽमन्यन्ताऽसहायायां जातावित्थं बलात्कृतय आङ्गलानां मुखं शासनं च कलङ्कयन्तीति । अतस्तैः श्रीहोक्सनाधिष्ठिता समितिरेका व्यरचि । भरतवर्षीयाणामानुकूल्यं सम्पादयितुमेतया समित्या प्रशस्यः प्रयत्नोऽकारि ।

आङ्गलदेशगमनम्

षट्षष्ट्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे नेटाल्, ट्रांस्वाल्, केपोपनिवेशः, ओरेञ्जस्वायत्तराष्ट्रम् इत्यादयश्चत्वार उपनिवेशाः संघटय्य दक्षिणाप्रीकासंयुक्तराज्यम् इति व्यपदेशं प्रापिताः । प्रिटोरिया इत्यत्रास्य राज्यस्य विचारविभागः

प्रचारपरिणामः

---

१. धर्मस्य दाराः=धर्मदाराः । तादर्थ्ये षष्ठीसमासः । अश्वघास इतिवत् । धर्माचरणार्था दारा इत्यर्थः । अथ पुंभूम्नि दाराः इत्यमरात्पुंसि बहुत्व एवास्य प्रयोगः ।

२. उरसोऽण्च इत्यण् । उरसा निर्मित औरसः ।

३. हिनुमीना इति णत्वम् ।

४. व्यसनं दुःखम् । व्यसनं विपदि भ्रंशे दोषे कामजकोपजे—इत्यमरः ।

प्रतिष्ठापितोऽभूत्। तदानीं साम्राज्याधिकृता एतन्नूतनराज्याधिकृतेभ्य[1] इमं परामर्शं समदिशन्- नामलेखनविधानं निराक्रियताम्[2]। जातिविशेषाश्रयिण्यो यन्त्रणा अपनीयन्ताम्। भरतदेशीयेषु सद्-व्यवह्रियताम्। आङ्गलसमाजस्यार्थजातं साधयितुं येऽलं स्युस्तेषां प्रतिवर्षं भरतवर्षादागन्तुकानां संख्या च नियम्यताम्। एवमधिवेलं[3] स्थितेषु नगरेषु वसतो जनान् निर्वास्य योऽनुनयो भविता सोऽस्माभिर्नानुसंस्यते। तद्वास्तव्यानबाधित्वा जातेर्वर्णस्य च भेदमपाकृत्याङ्गलानां भरतवर्षीयाणां चाधिकाराः समीक्रियन्ताम् इति।

गोखलेमहाभागस्यागमः

आङ्गलदेशात्परापत्य श्रीगान्धी गोखलेमहाशयमाफ्रीकामागत्य तत्रत्यवृत्तान्तसाक्षात्करणे प्रायुङ्क्त। आतुरोऽपि महामतिर्गोखलेः सुहृदः श्रीगान्धिनोऽभ्यर्थनां प्रत्यादेष्टुं नाशकत्। अभ्यागतः स सर्वैर्भरतवर्षीयैराङ्गलैश्च समं सभाजितः[5]। संयुक्तराज्याधिकारिभिः स राजवत्पुरस्कृतः। प्रतिज्ञातं च तैर्वयं विधानान्तरपरिवृत्त्या सहैव पञ्चचत्वारिंशद्रूप्यकात्मकं करमपि प्रत्यादेक्ष्याम इति। एवमनाकुलतां सम्पाद्य गोखलेमहाशय आङ्गलदेशं प्रातिष्ठत।

पुनः सत्याग्रहग्रहः

सप्तषष्ट्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे प्रिटोरियाव्यवहारमण्डपे कस्यचिद् भरतभूमिजस्याङ्गलस्य च

---

१. क्रियाग्रहणमपि कर्तव्यमिति सम्प्रदानत्वाच्चतुर्थी।

२. प्रत्याख्यायताम्। प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः—इत्यमरः।

३. वेलायामित्यर्थः। विभक्त्यर्थेऽव्ययीभावः।

४. वसेस्तव्यत्कर्तरि णिच्च इति कर्तरि तव्यत्प्रययो णिच्च। वसतीति वास्तव्यः।

५. अथ द्वे आनन्दनसभाजने आप्रच्छनम्—इत्यमरः। सभाजित आलिङ्गनकुशलप्रश्नादिनानन्दितः।

६. राजानमर्हतीति राजवत्। तदर्हम् इति वतिः।

व्यवहारो निर्णय आसीत्। तत्र न्यायाध्यक्षा[1] अधिकारिभिः परवन्तो भरतवर्षीयाणां विवाहोऽवैध इति व्यवातिष्ठिपन्। इमां व्यवस्थामाश्रित्याधिकारिणः प्रस्तावमेकं प्रास्तुवन्। येन स्वीकृतेन भरतवर्षीयाणां विवाहोऽवैध इति प्रेते मूलपुरुषे तदपत्यं पित्र्यमृक्थं नार्हिष्यति। तच्च रिक्थं राजसात्[2] करिष्यत इति नियमः प्रवर्तिष्यते।

एतं प्रस्तावमाकर्ण्य भरतखण्डजा अवष्टब्धा विवृद्धमन्यवः समजायन्त। विधिना परिणीताः कुलाङ्गना अनेन राजनियमेन कुलटात्वं गमिताः, तदपत्यानि च जारजत्वमित्यसीदंस्तासां हृदयान्यज्वलंश्च गात्राणि। सर्वत्र जनपदे व्याप्तसर्वदिक्कः[3] प्लोष इव समजनि। यद्यपि महात्मना विधानस्यास्य प्रतिभयाः[4] परिणतीः स्मारिता अधिकारिणस्तथापि ते तदनुशिष्टिमनादृत्ययैकोनसप्तत्यु-त्तरनवशतोत्तरसहस्रतमे वत्सरे तं प्रस्तावमभ्युपागमन्।

संयुक्तराज्याधिकृतानुपसंगम्य तान् बह्वभ्यर्थ्य च महात्मा यतो न किञ्चित्तुष्टिकरं प्रतिवचो लभतेऽतः सर्वस्मिन्देशे सत्याग्रहप्रारम्भ-मुद्घोषयति।

तदनुसारेण तदानीन्तन्यस्तत्रत्याः स्त्रियो निश्चितिमेतामध्य-गमन्—यदि काचिल्ललना देशगौरवं रक्षितुं कुलस्थितिं च समर्थयितुं कुटुम्बेन सहैव कारां न प्रवेक्ष्यति प्रवेष्टुं वा न संनत्स्यति सा भरतवर्षीया स्त्रीति न गणयिष्यते, जातेश्च बहिष्करिष्यते। अस्मिन्सङ्कटेऽस्माभिः स्वं कृत्यं कृत्वाऽऽत्मा कृतार्थनीय इति।

---

१. आधिकरणिकेऽर्थे न्यायाधीश इति केषाञ्चित्प्रयोगो भ्रमनिबन्धनः।
२. तदधीनवचने इति साति:। राजाधीनमित्यर्थः।
३. व्याप्ताः सर्वा दिशोऽनेन सः।
४. प्रतिगतं भयमस्मिन्निति प्रतिभयम् भीषणम्। प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः इति समासः।

पुरुषेभ्यः प्रागेव स्त्रीभिरुत्साहः प्रादर्शि। श्रीगान्धिसहधर्मिण्याऽधिष्ठिताभि[1]स्ताभिः सत्याग्रहिनारीसङ्घः प्रकल्पितः। योहन्नसबर्गस्त्रीभिरपि नेटाल्वासिनीनामनुकुर्वतीभिस्तादृशः संघः संघटितः।

विजयपताकां दोधूयमानाः शतशो जामयो ग्रामाणामन्तरतो गत्वा ट्रांस्वाल् इत्यत्र प्राप्नुवन्। तत्र सानन्दं सस्मितं भ्रूविकारमन्तरेण च ता आत्मानं रक्षि[2]वर्गैरग्राहयन्। आसां काश्चनान्तर्वत्न्यः[3], काश्चन स्तनन्धया[4]न्धापयन्त्य[5] आसन्। भरतदेशललामभूतानां रमणीनामेतत्साहसिक्यं सहिष्णुत्वमात्मोपहारश्चावलोक्य परममद्भुतमसन्यन्ताङ्गलाः।

गोखलेमहाशयाय यत्संयुक्तराज्याधिकृतैः प्रत्यश्रावि तन्नाद्याप्यकारि। पञ्चचत्वारिंशद्रूप्यकात्मककरात् केवलं स्त्रिय एव विप्रमोक्ष्यन्ते। ताभिरपि करस्य स्थाने प्रतिवर्षं प्रमाणपत्रमादातव्यमिति व्यधीयत। इत्थमसत्यसन्धांस्तानुपलभ्य शमप्रधानः श्रीगान्धी अधिकृतान्पुनरावेदयत्। परं ते किमपि नाविदुस्तूष्णीं चास्थुः।

सत्याग्रहिनारीसङ्घेन प्रयुक्ता भरतदेशजा भरण्यभुजः[6] शिल्पालयेषु स्वव्यापृतिमजहुः। तथा सति शिल्पालयाधीशास्तान् भृशमतर्ज-

---

१. नीताभिरनुशिष्टाभिर्वा।
२. ण्यन्तस्य ग्राहेर्धातोर्द्विकर्मकत्वं केचित्प्रतिपन्नाः केचिन्न। उभयथा हि प्रयोगा दृश्यन्ते। अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक—इति कुमारे। उपाध्यायेन त्वमासनं प्रतिग्राहितः—इति विक्रमोर्वशीये। रघौ तु द्विकर्मकत्वप्रतिपद्यमानेन कविना धातुरयं प्रयुक्तः—अथ प्रजानामधिपः प्रभाते जायाप्रतिग्राहितगन्धमाल्याम् इत्यत्र।
३. गर्भिण्य इत्यर्थः। आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी—इत्यमरः।
४. स्तनं धयतीति। शिशुरित्यर्थः। नासिकास्तनयोर्ध्माधेटोः इति खश्।
५. धेट् पाने इति धातोर्णिचि शतरि रूपम्।
६. भरण्यभुजः कर्मकराः। भरण्यभुक्कर्मकरः—इत्यमरः। भरण्यं वेतनं भुङ्क्ते इति।

यन्त विविधश्चाभीषयन्त। परं यदा ते विभीषिका अवधीर्य स्वस्थैर्यं प्रादर्शयंस्तदा ते सभामकारयन् यत्र महात्मानमपि न्यमन्त्रयन्त। तत्र सभायां महात्मनाऽऽङ्ग्लसमाजस्य पुरतो वास्तवं कार्यनिवृत्तिकारणं विवृतम्। इहत्या अधिकारिणो महामतये गोखलेमहाशयाय संगीर्यापि करं नापनुदन्तीति। त इदं निशम्य चित्रीयमाणा[1] अस्य वचसः पारमार्थिकत्वमुपलब्धुं प्रायतन्त। तैं पृष्टो जेन्रल् स्मट्स् इत्याख्योऽधिकृतस्त्वेतमर्थमत्यन्तमपालपत्। परं फिशर्नामा कश्चिदुच्चैःपदस्थ उक्तमनृतं हिनस्तीति, समूलो वा एष परिशुष्यति योऽनृतमभिवदतीत्यलीकाद्बिभ्यद् अनाशङ्कमान इदमवादीत्—मत्समक्षमेव जेन्रल् स्मट्स् इत्यनेन गोखलेमहाशयाय करापनोदः प्रत्यज्ञायीति। एतत्सर्वं ज्ञात्वापि ते शिल्पालयाधीशा अस्मिन् विषये माध्यस्थ्य[2]मभजन्त। श्रमिणश्चानेकैरुपायैरनारतमबाधन्त। एतत्समीक्ष्य महात्मा सर्वान् श्रमिणः फिनिक्साश्रमं प्रति गमनमाज्ञापयत्। एवमाज्ञप्तास्ते तमाश्रमं प्रत्यपद्यन्त। अनेनाधुनातनः सत्याग्रहोऽभूतपूर्वां भीषणतां प्रापत्। यदा पुरुषाः स्त्रियो बालाश्च विधानमतिक्रमितुं संनह्यास्मादाश्रमान्निरक्रामंस्तदा तीर्थे यियासूनां यात्रिकाणां कश्चिन्महान् सार्थ[3] इवालोक्यत। सर्वो लोक[4] इदं धर्म्यमायोधनमित्यमन्यत। तदात्वे तैर्गीयमानं—वीराः! अवगणय्य सुखदुःखे कर्तव्ये कर्मणि प्रसिता भवतेत्याशयं गीतं श्रोतृणां मनांस्यावर्जयत्। अस्य सङ्घस्य प्रधाननायको रुस्तमजिरितिसंज्ञः कश्चित् पारसीक आसीत्। प्राप्ते सत्याग्रहावसरे पिता[5]पुत्रयोर्मध्ये विधानातिक्रमेण कतरः प्रथमं कारा-

---

१. विस्मयमाना इत्यर्थः। नमोवरिवश्चित्रङः क्यङ्।
२. ताटस्थ्यम्। अनास्था इत्यर्थः। तथा च कुमारे प्रयोगः—
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे। इति।
३. सङ्घ इत्यर्थः। अयं प्राणिनामेव संघे वर्तते। संघसार्थौ तु जन्तुभिः—
इत्यमरः।
४. जन इत्यर्थः। लोकस्तु भुवने जने— इत्यमरः।
५. आनङ् ऋतो द्वन्द्वे इत्यानङ्।

माप्नुयादिति विषये वैमत्यमासीत् । तत्पुत्रः सोराबजिरित्थं पितरं समबूबुधत् – तात ! भवान् स्थविरः, अतो गृहेऽवस्थाय तत्सम्बन्धीनि कार्याण्यवेक्षताम् । इदानीमहं सत्याग्रहमास्थास्यामीति । रुस्तमजिरेवं प्रत्यभाषत प्रियतनूज ! अभिनववयास्त्वं सुखमेव सर्वदाभुक्थाः[1], दुःखं न समवेदीः[2], अतो गृह एवावस्थायात्रत्यकार्यजातं पर्यवेक्षस्व । अहं सत्याग्रहमास्थास्यामीति । नैकोऽपि गृहेऽवस्थानमभ्युपागात् । अतस्तावुभावपि सत्याग्रहयुद्धे संयत्ता[3]वभूताम् ।

अपरोऽपि रुचिकरो व्यतिकरो[4]ऽस्मिन्सङ्घर्षे समजनि ।

अयमेव रुस्तमजिः श्रीमर्दूम इतिनामानं प्रवयसं द्रष्टुमुपागमत् । तदा श्रीमर्दूमस्य वचः श्रुत्वा रुस्तमजिररोदीत् । श्रीमर्दूमेनोक्तम्— प्रिय मित्र ! यद्यहं तथोल्लाघः[5] स्यां यथा शय्याया उत्तिष्ठेयन्तर्ह्यहमपि सत्याग्रहयुद्धे व्याप्रियेयेति !

फिनिक्साश्रमस्थैरस्मिन्युद्धे महत्साहायकमकारि । कृच्छ्राणि सोढानि । अनिद्रमनिशमनेकस्मिन् संविधाने प्रयत्तम् । विक्टोरिया मण्डले यदा कार्यनिवृत्तिरभूत् तदा शतशः श्रमिण आश्रमं शरणं प्रापद्यन्त । तेषां सर्वेषां भोज्यपेयादेरुपकल्पनमपि नेषत्करमासीत् । श्रमिणामधीशैराश्रमवासिन आक्रम्येरन्निति भीरप्याविरासीत् । परमाश्रमस्था एवं दुःखं निर्वहन्तोऽपि मनागपि नाव्यथन्त ।

यदाश्रमस्थाः सर्वे बन्दीकृत्य कारां प्रवेशितास्तदा योहन्नसबर्गी-

---

१. भुजोऽनवने इत्यात्मनेपदम् । लुङि मध्यमैकवचने रूपम् ।
२. संपूर्वाद् वेत्तेर्लुङि रूपम् । विदिप्रच्छिस्वरतीनामुपसंख्यानम् इत्यनेनात्मनेपदं न भवति । तत्राकर्मकात् इत्यस्यानुवृत्तेः ।
३. संयत्तौ संनद्धौ ।
४. व्यापार इत्यर्थः । व्यापारे मुदि सम्बन्धे योगे व्यतिकर इति शब्दार्णवः इति घनश्यामः ।
५. निरामयः । वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात्—इत्यमरः । अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः इति निपातितम् ।

याणामुत्साहो न[1] वपुषि प्राभवत्[1]। स्त्रियोऽपि नाम कारावासमभिलाषुका[2] अभूवन्। थाम्बीनायकस्य सर्वः पोष्यवर्गोऽस्मा आरम्भायोदयुङ्क्त।

अभिव्यापिका कार्यनिवृत्तिः

एतद्वर्गीयः स्त्रियः शिशून् क्रोडीकृत्य गृहान्निर्गत्यान्याभिः स्त्रीभिः संगत्य सर्वंगतायै कार्यनिवृत्तये श्रमिणो जनान् प्रचोदयन्। ताः सर्वाः समवेत्य न्यूकैसल् (अभिनवसौधम्) इतिनामानं संवसथं संगत्य तत्रत्यश्रमिणां सहधर्मिणीः सम्यगनुशिष्य श्रमिणः कार्यविसर्गं प्रति प्रैरयन्। असूर्यम्पश्या[3] अवगुण्ठितवदना याः कुलाङ्गनाः सोपबर्हां[4] शय्यामन्तरेण स्वापं नापन्, ता विषह्य क्लान्ति विजित्य लज्जां सर्वेषां साम्मुख्यमादधुः। ताभिः प्रयुक्ताः श्रमिणः[5] कार्यनिवृत्तिं प्रतिपन्नाः। इतरत्रापि सर्वत्र खनिषु कार्यविसर्गे प्रवृत्ते प्रणेतृमण्डलादेशानुसारेण[6] कर्मकराः खनीस्त्यक्त्वा अभिनवसौधे संनिपतिताः। तदात्वे स ग्रामः तीर्थं इवाभासत। यत्र संख्यातिगा यात्रिणो जीवितसाफल्यं समीहमानाः प्रत्यहं परापतन्। तेषु शतशः स्त्रियः पृथुकानुत्सङ्गे निधायाध्वानमगच्छन्। स्त्रियो वा पुरुषा वा सर्वे स्वं स्वमुपकरणं शिरसाऽबिभरुः।[7] कश्चित्तत्राह्नि संन्यधीयत, कश्चिन्निशि। यत्किमपि भोज्यं तेभ्यस्तदानीं प्रणेतृभिः प्रत्तं[8] तेनैव

---

१. तनौ नामात् इत्यर्थः। गुरुः प्रहर्षः प्रबभूव नात्मनि इति रघौ।

२ अभिलषणशीला इत्यर्थः। लषपतपद—इत्यादिना उकञ्। अत एव न लोकाव्ययेति षष्ठीनिषेधे कारावासम् इति द्वितीयान्तम्।

३. असूर्यललाटयोर्दृशितपोः इति खश्।

४. सोपधानामित्यर्थः। उपधानं तूपबर्हः—इत्यमरः।

५. शमित्यष्टाभ्यो घिणुन्। श्रमितुं शीलमेषां ते।

६. प्रणेताऽधिष्ठाता, निर्वाहयिता, व्यवस्थापकः। एतस्मिन्नर्थे उदीच्येषु क्वचित्प्रबन्धृशब्दप्रयोगो दृश्यते। कविभिस्त्वेतस्मिन्नर्थेऽप्रयुक्तत्वान्नायमादरणीयः।

७ सदप्यधिकरणत्वमविवक्षितम्। करणत्वं तु विवक्षितम्। विवक्षाधीनानि कारकाणि। धातुमत्तां शिखरैर्बिभर्ति इत्यत्र यथा।

८. अच उपसर्गात्तः इति तकारादेशः। दत्तमित्यर्थः।

तेऽतुषन्। सर्वे प्रसन्नवदना अवालोक्यन्त। भुवि तृणशयनेऽशेरत। इमे तत्र खनिवासहानेनावाङ्मनसगोचरं[1] कष्टमन्वभूवन्।

**उद्देशपूर्तिः**

अभिनवसौधम् इत्यत्र मनुष्याणां त्रिसहस्र्यै पर्याप्ते प्रदेशे दशसहस्रीसंनिवेशः कुतः संभवो। यदि च कालान्तरं तत्रैवोष्येत तर्हि कस्यचिद् भयदस्यातङ्कस्य समुत्पादः स्यादिति महती संशीतिरिति ततः प्रस्थानमेव श्रेयसेऽभिप्रेतसिद्धये चेति मन्यमाना नेतारः कर्मणो विरतान् कर्मकरान् ट्रांस्वाल्मर्यादातिक्रमेण कारावाप्तये प्राणुदन्। एतां निश्चितिमनुसृत्य महात्मा पञ्चविंशतिं कर्मकरान् सहादाय चार्लसपुरं प्रति प्रायात्। ततः स ग्रामोऽदूरपञ्चविंशाः[2] क्रोशाः येऽध्वानं गन्तुमीशास्ते पद्भ्यामगच्छन्। इतरे विशेषतः स्त्रियो बालाश्च लोहपथसंचारीणि बाष्पयानान्यारोहन्। सर्वेषां सकाशे द्वैयह्निकं[3] भोज्यमासीत्। चार्लसपुरं प्राप्तास्तेषां मध्येऽध्यर्धशतं[4] पुरुषा राजपुरुषेणैकेनागत्य जिघृक्षिताः। परमिमे चार्लसपुरं यावन्मयैव सह यान्तु प्राप्ते च तस्मिन्यथादेशं करिष्यत इति महात्मनः परामर्शं स्वीकृत्य तेन तान् तस्मिन्समर्प्य न्यवर्तिं। तत्र ग्रामटिकायां जनसहस्रवास्तव्यायां महान्तमेतं जननिवहं दृष्ट्वा गौराङ्गाः परं व्यस्मयन्त। तत्रैव च त उक्तपूर्वाः पुरुषा रक्षिभिरग्रहीषत[5]। अवशिष्टाः कञ्चित्कालं

---

१. अचतुरविचतुरसुचतुर—इत्यादिना निपातितो द्वन्द्वः। वाक् च मनश्च इति वाङ्मनसे। वाङ्मनसयोरगोचरमविषयमित्यर्थः।

२. संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये इति बहुव्रीहिः। अदूराः पञ्चविंशतेरिति विग्रहः। बहुव्रीहौ संख्येये डजबहुगणात्—इति डच् समासान्तः।

३. द्वे अहनी भावि द्वैयह्निकम्। तमधीष्टो भृतो भूतो भावि इति भाविन्यर्थे कालाट्ठञ् इति ठञ्। तद्धितार्थे द्विगुः। राजाहःसखिभ्यष्टच् इति टच्समासान्तः। टचि अह्नोऽह्न एतेभ्यः इत्यह्नादेशः।

४. अध्यारूढमर्धं यस्मिंस्तत्। प्रादिभ्यो धातुजस्य—इत्युत्तरपदलोपः। अध्यर्धं च तत् शतं च इति कर्मधारयः।

५. ग्रहेः कर्मणि लुङि रूपम्।

तत्रावातिष्ठन्त । तदन्तराले सहस्रपञ्चकप्रायमिताः कर्मकराः समवायन् । परं तत्रापि चिरं वासो नोचित इति ततः प्रयाय ट्रांस्वाल् इति प्रविश्यात्मग्रहणं साध्यमिति निरचैषुर्नेतारः । इदञ्चोदघोषयन्—विदितमस्तु राज्याधिकारिणां यद्वयं बन्धनमात्मनः कामयमानाः ट्रांस्वाल् इति राष्ट्रं प्रविशामः । यावत्पञ्चचत्वारिंशद्रूप्याकात्मकः करो नापनेष्यते तावद्वयं सततमटनं करिष्यामः । अन्ते च फिनिक्स इत्यत्र गत्वा वत्स्याम इति ।

एवं निश्चयं प्रथयित्वा महात्मानं पुरोधाय त्रिसहस्रातिरिक्ता जनास्ततः प्रास्थिषत । यदा ते स्टेण्डर्टन् इत्यभिधानमधिष्ठान[1]मापंस्तदा महात्मा राजपुरुषैरग्राहि । श्रीपोलकमहोदयस्तदानीमफ्रीकावासिनां भरतदेशजानां हिताय भरतवर्षं यियासुरिदं दृष्ट्वा कर्मकराणां प्रयाणादिकमध्यतिष्ठत् । अभियुक्तो महात्मा डण्डीव्यवहारमण्डपे भौमवासरे समुपातिष्ठत् । प्राड्विवाकस्य समक्षं यत्तेनावाचि तत्संक्षिप्येहोपन्यस्यते—अहमभियोगयाथार्थ्यमभ्युपैमि । अहमिहत्यः प्रतिष्ठितो व्यवहारोपजीवीति मत्तो नान्योऽस्मिन्कर्मणि प्रष्टव्यः । अहमेव सत्याग्रहिसङ्घं ट्रांस्वाल्सीमाविक्रमणे प्रैरयम् । कर्मकरा अपि वयमिवान्यदाऽऽपद्येर[2]न्नित्याशङ्क्यास्माभिः सर्वैः संभूय विपत्प्रतीकारः करणीय इति कर्मकरानहमितरैः समयोजयम् । अनेन कार्यविरमेण गौराङ्गाणामाकराधीशानां भवित्रीं क्षतिमहं साधु वेद्मि परं भरतभूमिजानां कर्मकाराणां हितोपदेशोऽपि मम धर्म इति मे मतिः । इदानीं यावन्मया स धर्मोऽनुपालितः । स्वदेशजान्प्रियानहमिदमेवोपदिदिक्षामि—यावदयं करो नापनुद्यते तावत्खनीस्त्यक्त्वा कार्यालयांश्च विहाय भैक्षं[3] चरत । श्रद्दधेऽस्य नैष्ठुर्यस्येदृशीनां

१. अधिष्ठानं पुरम् । अधिष्ठानं चक्रपुरप्रभावाध्यासनेष्वपि—इत्यमरः ।

२. आपद्गताः स्युरित्यर्थः । तथा च श्रीरामायणे प्रयोगः—

अर्थधर्मौ परित्यज्य यः काममनुवर्तते ।
एवमापद्यते क्षिप्रं राजा दशरथो यथा ।।

३. भिक्षैव तत्समूहो वा । चरतिरत्रार्जनपूर्वके चरणे वर्तते ।

बलात्कृतीनां च कष्टसहनादृते न परिणतिर्भविष्यतीति।

एवमभियुक्तो महात्मा सपादवत्सरं कारावासं प्रापितः।

पोलकमहाशयेन सम्यङ् नीताः कर्मकरा बेल्फोर्नामकं नगरमध्यगच्छन्। तत्र त्रीणि बाष्पयानानि तान् नेटाल् इत्यभिधं प्रदेशं नेतुं सज्जान्यासन्। सर्वे कर्मकरा आसिद्धाः[1] सन्तो बाष्पयानान्यारोप्य चार्लसपुरमित्याख्यं ग्रामं नीताः। प्रथममगृहीतः पोलकमहाशयोऽपि तत्र प्रगृहीतः। तत्र चाष्टौ होराः[2] किमप्यप्राश्य ते बलादयाप्यन्त। तृषाशुष्यत्कण्ठास्ते तं कालं कथं कथमप्यनैषुः। तदनु ते बाष्पयानान्यारोप्य ततोऽनीयन्त। यानविरामस्थाने स्वल्पमेव कालं यानानि व्यरमन्[3]। शस्त्रभृतः प्रहरिणस्तत्र जागरूका आसन्। तत्र शतशः स्त्रियस्तान्द्रष्टुमुपागमन्। पर्यश्रुनयनास्तास्तानेवमुपादिक्षन्—स्वकृत्यमवधीयताम्, अस्मत्कृते न काचिच्चिन्ता क्रियतामिति। बाष्पयानैरूढा द्विसहस्रं कर्मकरा यावन्नेटाल् इत्यत्र प्राप्तास्तावदभियुक्तास्सन्तः कारां प्रवेशिताः। एवं कारावासप्राप्तिरूपं कार्यनिवृत्तिप्रयोजनं सिद्धम्।

विजयः

यदा द्विसहस्रस्य वीराणां कारासु निक्षेपस्योदन्तः सर्वत्र दक्षिणाफ्रीकास्थनगरेषु भरतवर्षे आङ्ग्लदेशे चाप्रथत, तदा डर्बनादिमहानगरेषु राज्याधिकारिणो बलवदगर्ह्यन्त। भरतवर्षमपि नितान्त संक्षुभितमभूत्। तदानीन्तनं सम्राट्प्रतिनिधिं श्रीहार्डिञ्जमहानुभावमुपेत्य प्रतिष्ठिता भरतवर्षीया आफ्रीकाधिकारिणां भरतभूमिजान्प्रति क्रूराचारानन्याय्यव्यवहारांश्च

---

१. संयता इत्यर्थः। आङ्पूर्वः सेधतिर्बन्धनेऽर्थे वर्तते। परं तिङि प्रयोगस्तु न दृष्टः।

२. द्वितीयान्तं पदम्। अनुक्ते कर्मणि द्वितीया। लकारस्तु प्रयोज्यकर्मणि। प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः इति ह्युक्तम्।

३. व्याङ्परिभ्यो रमः इति परस्मैपदम्।

सुष्ठूपावर्णयन्नयाचंश्च तत्प्रतिक्रियाम्। एवं प्रबोधितो लार्डमहोदय एकदा मद्रासपुर्यां भाषमाणो यथावद्[1] एतद्देशजानां मतमपुष्णात्। एवं हि तत्र भवानवादीत्—अद्यत्व आफ्रीकाराज्याधिकृताः प्रोषितान्भरतवर्षीयानदयमन्याय्यमाचरन्ति[2]। प्रोषितैर्भरतदेशजैरन्याय्यान् विपद आहर्तॄन् विधीन् विरोद्धुं य उपाय आस्थितस्तत्राद्य यावदुदासीना अपि वयमवस्थितेर्भयङ्करत्वान्नोदासितुमर्हामः। आफ्रीकाधिकृतांश्चोच्चकैरावेदयामः—नितान्तमन्याय्या वो वृत्तिर्भरतवर्षीयेष्विति।

प्रोषितैर्भरतभूमिजैः केवलमन्यायप्रतिरुरुत्सयैव भावि दुःखौघं विद्वद्भिरेव[3] सत्याग्रहव्रतमचारि कारावासश्चालाभि। अतो नैकोऽपि तेषामेनस्वीति वक्तुं शक्यम्। वयं तेषामिममुद्देशं समर्थयामः न केवलं भरतवर्षीया इमां तेषां प्रवृत्तिं प्रशंसन्ति, अपि तु न्यायप्रियाणां वैदेशिकानामपि हृदयानि द्रुतानि समदुःखभाञ्जि भवन्ति।

इदानीन्तु तत्रत्यावस्थितिरतिमात्रं शोच्या समजनि। भरतवर्षीयास्तथाऽसद्व्यवह्रियन्ते यथा कस्यचनापि शिष्टस्य शासितुः सह्यं न भवति। वयमेतमन्यायमवसितमिच्छामः। दृढं च प्रतीमो यदाफ्रीकाराज्याधिकृता एतद्देशजेषु न्यायेन वर्तितुं न पारयन्ते। ते हि साम्राज्याधिकृतान् भरतवर्षराज्याधिकृतांश्चासकृदन्याय्यविधिपरिहारं श्रद्धापितवन्तः। असत्यया सन्धया स्वं[4] मतिसंहितवन्तः[5]श्च।

---

१. अर्हार्थे वतिः। यथार्हमित्यर्थः।

२. व्यवहारार्थ आङ्पूर्वश्चरतिरकर्मकः सकर्मकश्च। उभयथा हि प्रयोगा दृश्यन्ते। अकर्मको यथा—प्राप्ते तु षोडशे वर्षे पुत्रे मित्रवदाचरेत् इत्यत्र। सकर्मको यथा—पुत्रमिवाचरति पुत्रीयति च्छात्रम्।

३. विद्वद्भिरित्यर्थः। विदेः शतुर्वसुः इति शतुर्वसुरादेशो वा।

४. आत्मानमित्यर्थः। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने—इत्यमरः।

५. वञ्चितवन्तः, विप्रलब्धवन्त इत्यर्थः। अतिसंपूर्वो दधातिर्वञ्चनेऽर्थे वर्तते। य आत्मानमतिसन्धत्ते स परस्मै स्यात्कथं हितः इति तन्त्रवार्तिके। परातिसन्धानमधीयते यैर्विद्येति ते सन्तु किलाप्तवाचः इति च शाकुन्तले।

अतः प्रयतिष्यामहे यथा भरतभूमिजानाव्यवस्थितिं परमार्थत उपलब्धुं काचित्समितिर्नियुज्येतेति। एतस्याः समितेः सर्वं साक्षात्कृत्य यथावस्तुविवरणं करिष्यन्ति तथा साम्राज्याधिकृताः संयुक्तराज्याधिकृतान् भरतवर्षीयान्प्रति न्याय्यं व्यवहारमादेक्ष्यन्ति। तच्च पश्चान्निर्दिष्टैरवश्य[1]करणीयतामापत्स्यत इति ध्रुवम्।

आङ्ग्लदेशेऽपि लार्ड्[2]एम्थिलमहोदयस्य प्रयासैः सत्याग्रहिणां कष्टवृत्तान्तः सर्वत्र प्रचरितोऽभूत्। अचिरेणैव कालेन साम्राज्यसभया संयुक्तराज्याधिकारिण आदिष्टा भरतवर्षीयाणामवस्थितिं परिचेतुं चैका समितिर्नियुज्यतामिति। तथादिष्टास्ते सालोमनकमीशन् इतिनाम्नीं समितिमरर[3]चन्। कालेनैतया समित्या यथावदुपलभ्य सर्वमविकलं संयुक्तराज्याधिकृता आवेदिताः। इत्थमावेदितास्ते भरतवर्षीयाणामभीष्टं विधानविशेषनिरसनमभ्युपायन्। एवं सत्यचिरेण पञ्चचत्वारिंशद्रूप्यकात्मकः करोऽपाकृतः। प्रविविक्षूणां भरतवर्षीयाणां विषये जातिभेदनिमित्तको व्यवहारभेदोऽस्तं गमितः। हिन्दूनां मुहम्मदीयानां चोद्वाहा वैधा इति व्यवसिताः। भरतखण्डजानां रिक्थं तदपत्यान्यर्हन्तीति विनिश्चितम्। केपोपनिवेश इत्यत्र प्रवेशोऽभ्यनुज्ञातः। नामलेखनविधिरपहस्तितः[4]। स्त्रीभिः प्रमाणपत्रस्याधिगमोऽप्यनपेक्ष इत्यभ्युपेतम्। परिशिष्टानां कासाञ्चिदहितानां व्यवस्थितीनां विषये जेन्रल् स्मट्स् इत्यनेन महात्मने प्रतिश्रुतमर्वाग्[5] बहोः कालात्ताः प्रतिविधास्यन्त इति।

---

१. लुम्पेदवश्यमः कृत्ये इति मकारलोपः।

२. लार्ड् इति प्रभुशब्देन समानार्थक आङ्ग्लभाषाविन्यासः।

३. रच प्रतियत्ने इति धातोश्चौरादिकाददन्ताल्लुङि रूपम्।

४. अपहस्तितो निराकृतः। अयं ममापहस्तितलज्जो व्यवसायः इति विक्रमोर्वशीये। अपसारणार्थो हस्तोऽपहस्तः। ततः तत्करोति तदाचष्टे इति णिचि निष्ठायां रूपम्।

५. अर्वाग् इत्यत्र प्रागर्थे प्रयुक्तम्। अर्वाक् संवत्सरात्स्वामी हरेत परतो नृपः इत्यत्र याज्ञवल्क्यस्मृतौ यथा।

एवं संशितव्रतैः[1] सत्याभिनिविष्टैश्चरिततिग्मतपोभिर्महात्मना-ऽधिष्ठितैर्भरतभूमिजैर्जितम् । एवं हि वैधसी प्रीति[2]राप्यते ।

मातृभूमिं प्रति गमनोद्यमः

एतां सुव्यवस्थितिमवलोक्यानन्दिषुर्भरतभूमिजाः प्रजाः । महात्मन उपकृतिं स्मारं स्मारमनंसिषुर्जनाः । कोटिशो धन्यवादांश्चावादिषुः । वृद्धास्तमाशिषाऽऽशासिषत । महात्मा त्वत्रावसितकृत्यो-ऽहम्, मदीयामिह स्थितिमिदानीं नापेक्षन्ते भरतवर्षीयाः, अतो मया भारतं वर्षं गमनीयम्, तत्र भरतदेशस्थानां परिचर्ययात्मनश्चारितार्थ्य-मभीप्सनीयमिति विनिश्चित्य भारतभुवं प्रति प्रस्थातुमुदयुङ्क्त । इमां वार्तामाकर्ण्य सर्वे भरतदेशजा उदविजन्त । आपन्नार्तेः शमयितारं विषमस्थस्य जनस्याभ्युपपत्तारं[3] परस्य कारणादनेकस्य व्यलीकस्य[4] सोढारं नेतारं ततः प्रतिष्ठासुं निशम्य तेन विरह्यमाणाः परं दुःखममंसत । तस्मिन्काले महात्मा डर्बननगर आसीत् । तत्रत्यैर्जनैः स स्वोत्साहस्यानुरक्तेश्च सदृशमभिनन्दित आपृष्टश्च । ततः स भवान् योहन्नसबर्गमागात् । तत्रत्यैर्भरतदेशीयैराङ्गलैश्च सहस्रशः संभूय महती परिषत् कृता, अभिनन्दनपत्रेण च तत्र महात्मा यथेष्टं पुरस्कृतः । अर्थ्याभिः[5] स्तुतिभिरभिष्टुतश्च । अत्रैव महात्मानं प्रहृतपूर्वी उद्यानाभिजन उत्थाय महात्मनश्चरणयोर्न्यपतद्, अपराधक्षमाश्चायाचिष्ट ।

---

१. राद्धव्रतैः । तीर्णप्रतिज्ञैरित्यर्थः । संपूर्वात् श्यतेः क्तिनि रूपम् ।
२. प्रीतिरानन्दः । मुत्प्रीतिः प्रमदो हर्षप्रमोदामोदसंमदाः—इत्यमरः ।
३. आपद्गतस्यानुग्रहीतारमित्यर्थः । अभ्युपपत्तिरनुग्रहः—इत्यमरः ।
४. व्यलीकं दुःखम् । दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्यवस्तुनोः—इति वैजयन्ती ।
५. अर्थादनपेताभिः । अर्थयुक्ताभिरित्यर्थः । धर्मपथ्यर्थन्यायादनपेते इति यत् ।

वाचितेऽभिनन्दनपत्रे महात्मा स्वासनादुत्थाय यदब्रवीत्तत्संहृत्येहोपन्यस्यते—अत्र मम च मम वध्वाश्चोपकृतयोऽतिस्तुताः[1]। अत्र विषय इयं नो धर्मदेशना—यत्र वयं स्तूयामहे तत उत्थायान्यत्र गन्तव्यम्, गमनासम्भवे सति कर्णौ पिधातव्यौ, तदसंभवे च सा स्तुतिः सर्वत्र जगति विभवति परमात्मनि समर्पणीयेति। अहमाशास इमां नः स्तुतिं परमात्मनि समर्पयितुं प्रभवेयमिति।

योहन्नसबर्ग इतीदं नगरं मम नाविदितचरम्। अत्रैवाहं तानि मित्राणि पश्यामि यैरत्रत्यविवादेषु मम साह्यं कृतम्। अत्रैव द्वाषष्ट्युत्तरनवशतोत्तरसहस्रमिते वत्सरे सत्याग्रहपरिग्रहोऽभूत्। अत्रैव चाहं श्रीडोक्महाशयस्य मैत्र्या कृती समजनिषि[2]। धर्मप्रियया तत्पत्न्या चोज्जिहानजीवितोऽहं विश्रब्धैरुपचारैः पुनरसून् प्रापितः। सर्वेषां स्थानानां योहन्नसबर्गस्यैव स्मृतिर्नः प्रियतमा भविष्यति। भरतवर्षं वर्जयित्वा दक्षिणाफ्रीकैव मम, मम कुटुम्बस्य च प्रेष्ठो देशो भविष्यति। यद्यप्यत्र मयोच्चावचानि कष्टानि सोढानि तथाप्यत्रैव मया चिरं साहाय्यकृतः सुहृदो लब्धाः। इहैव भरतवर्षीयाणां हिताकाङ्क्षिणी होक्सनसमितिरात्मानमलभत। अत्रैव बेलिअम्मा इतिनाम्नी तरुणी सत्याग्रहयुधि स्वप्राणानुपाहरत्। मुग्धा सा नाजानीत कीदृशी मे धृतिरिति। न चावेत् तया समाजस्य को लाभ इति। स्वदेशजानां कृते उत्साहातिरेक एव तस्याः काराप्रवेशे हेतुः। कारायाः प्रत्यावृत्तिकाले तस्याः काय एवं विकलोऽभूत्, यथा सा न चिराय प्राणीत्। योहन्नसबर्ग एव नागप्राणो नारायणश्चेमौ विंशतिवर्षदेश्यौ युवानौ प्राणानमुञ्चताम्। परं मम भार्याऽहञ्च भाग्यविपर्ययादध्रियावहि[3]।

---

१. अतिरतिक्रमणे इति कर्मप्रवचनीयत्वे उपसर्गात्सुनोतिसुवति—इत्यादिना षत्वं न भवति।

२. कृतमनेनेति कृती। इष्टादिभ्यश्च इतीनिः। कृतार्थं इत्यर्थः। यस्य वीर्येण कृतिनो वयं च भुवनानि च इत्यत्र यथा।

३. धृङ् अवस्थाने इति तौदादिकाद् धातोर्लङि रूपम्।

मम भार्य्यया मया च समेषां समक्षं कार्यमनुष्ठितमेभिश्च परोक्षम्। अतः प्रशस्या यदि केचिद् भवन्ति तर्हीम एव भवन्ति।

एषु मध्य एको हरवात्सिहनामा पञ्चसप्ततिवर्षः प्रवीर आसीत्। तमेकदाहं कारागारेऽदर्शम्। कस्मादिहागतो भवान्, इह कारासम्बन्धिनं श्रमं कुर्वन्नूनं मरिष्यतीति मया पर्यनुयुक्तः स प्रत्यवोचत्—मा भवान् मामबुधं मंस्त। अहमवैमि येन कारणेन भवन्तो राज्याधिकृतैर्विवदन्ते। यद्यपि भवता पञ्चचत्वारिंशद्रूप्यकात्मकः करो न देयस्तथापीतरैर्भरतदेशजैर्यथाभिसन्धि[1] कैङ्कर्य्यं[2] कृतवद्भिस्त्ववश्यदेय इति तदपाकृतये यदि स्वान् प्राणान् नोपहरेयं ततः किमु प्रियतरं यदर्थमुपहरेयमिति। अस्य वीरस्य दिष्टान्तो[3] डर्बनकारायां वृत्तः।

यद्यद्य दशापरिवर्त्तः कश्चिद् दृश्यतेऽयं सत्याग्रहजनित इति मन्ये।

स्ववचसां विरतिं वितन्वानोऽहं भवद्भिर्विप्रयोगं ध्यायन् नितान्तं विषीदामि। यद्यप्यसह्या ममैषा विरहवेदना[4] तथाप्यवार्यया कयापि शक्त्या प्रयुक्तोऽहं भारतं वर्षं जिगमिषामि। आफ्रीकादेश एव मया सर्वोत्कृष्ट आयुषो भागो यापितः। आफ्रीकादेशमहं सम्यक् परिचिनोमि। जन्मभुवमपि भरतवर्षं न तथा संस्तौमि[5]। तथापि लब्धावसरोऽहं तत्रैव यामि। यूयं भगवतीश्वरे विश्वस्य स्वं स्वं धर्मं पालयतेति मे हृदयाभिलाष इति॥

इत्युपाध्यायश्रीचारुदेवशास्त्रिणः कृतौ श्रीगान्धिचरिते
द्वितीयः परिच्छेदः॥

---

१. अभिसन्धिर्निश्चयः। कार्यान्तरसापेक्षः पणो वा। यथा—अथावश्यमेव माधवसेनः पूज्येन मोचयितव्यः श्रूयतामभिसन्धिः इत्यत्र मालविकाग्निमित्रे।

२. किङ्करस्य भावः कर्म वा कैङ्कर्यम्। दास्यमित्यर्थः। ब्राह्मणादित्वात् ष्यञ्।

३. निधनमित्यर्थः। स्यात्पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः-इत्यमरः।

४. विद चेतनाख्याननिवासेषु इति चौरादिकाद् धातोर्ण्यासश्रन्थो युच् इति युच्। ततष्टाप्।

५. परिचिनोमि। संस्तवः स्यात्परिचयः—इत्यमरः।

# अथ तृतीयः परिच्छेदः।

द्वासप्तत्युत्तरनवशतोत्तरसहस्रतमे वैक्रमे वत्सरे श्रीगान्धी मुम्बापुर्यां पोतादवतरत्। हिन्दवो मुहम्मदीयाः पारसीकाः कृश्चीना आङ्ग्लाश्चहमहमिकया[1] तस्मै प्रीतिपुरःसरं स्वागतं व्याहरन्। तदानीं नूतनवर्षो[2]पक्रम इति राजमन्त्रिणस्तस्मै भरतवर्ष[3]राज्यम् इतिनामिकां कीर्तिमुद्रां व्यतरन्[4]। मुम्बायां यदा तत्रभवान् श्रीगोखलेमहोदयं द्रष्टुमुपागमत् तदा श्रीगोखलेर्हितं मितं चेदमुपादिक्षत्—प्रियमित्र! कश्चित्कालमस्य देशस्याधुनातनी दशोपलम्भनीया पश्चाद् देशहिते कर्मणि व्यापारणीयमिति। एवं सख्या बोधितो महात्मा स्वदेशदशावलोकाय काश्चन प्रख्याता नगरीरभ्रमीत्[5]। चैत्रे मासि तत्रभवान् मद्रापुरीमगमत्। तत्र च ऋद्धिमता महीयसा जनकायेनाभिनन्दितः। तत्रावसरे तेनोदीरितानां वचसामयं संक्षेपः—

स्वागतम्

---

१. अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः—इत्यमरः। अहमहं शब्दोऽस्त्यत्र। वीप्सायां द्वित्वम्। व्रीह्यादित्वाट्ठन्। अहमहमिकया प्रणामलालसानाम् इति कादम्बर्याम्।

२. अत्र वर्षशब्देन ख्रिस्तवर्षमभिप्रेतम्।

३. कैसरे-हिन्द इति हि तत्र पारसीकभाषाविन्यासोऽभूत्।

४. विपूर्वस्तरतिर्दानेऽर्थे वर्तते। तथा चामरः—विश्राणनं वितरणं स्पर्शनं प्रतिपादनमिति दाननामसु वितरणमिति पपाठ। वितरतिकर्मणाभिप्रेतस्य सम्प्रदानसंज्ञा केषाञ्चिन्मताऽपरेषां न। उभयथा हि प्रयोगा दृश्यन्ते—भगवान्मरीचस्ते दर्शनं वितरति—इति शाकुन्तले। वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे—इत्युत्तरे रामचरिते।

५. भौवादिकाद्भ्रमेर्लुङि रूपम्। दिवादेस्तु अभ्रमद् इति भवति।

यदुक्तं भवद्भिर्मयैव जागर्ति[1]रेषाऽऽप्रोक्तास्थानां भरतवर्षीयाणां कृतेति तदसत्। नाहमेतदभ्युपैमि। यत्सत्यं तत्रत्यैः प्रगुणप्रकृतिभिरत्यर्थं विश्वसनशीलैः सुजनैरहं स्वकर्तव्यं बोधितः। तेषामात्मोत्सर्गेण चित्रेण भगवदनुरागेण चाहं सङ्कल्पितेऽर्थे स्थैर्याय नोदितः। नाहं कश्चिन्नेताऽभूवम्। परं दैवदुर्विपाकान्मम भार्याऽहं च कर्मजन्ययशश्चिचीषां शमयितुमक्षममाणौ तेषां पुरः स्थितौ। तस्यैतस्य मम कर्मण ईदृशे स्तवे भवतां सौजन्यमेव कारणम्। परगुणपरमाणून्पर्वतीकृत्य नन्दन्तीति हि सतां प्रकृतिरिति।

सत्याग्रहाश्रम-प्रतिष्ठा।

मासत्रयं यावद् भरतभुवि भ्रमित्वा तदानीन्तनं वृत्तान्तं साक्षात्कृत्य महात्माऽमदाबाद इति नगरं प्रति न्यवर्तत। तत्र शबरवतीतिनाम्न्यास्तटिन्या[2]स्तीरे फिनिक्साश्रमानुकारिणं सत्याग्रहाश्रमं प्रत्यतिष्ठिपत्[3]। आश्रमं प्रतिष्ठापयमानो महात्मैवं तत्प्रयोजनमन्वाचष्ट—यावद्वयं धार्मिका न भवामस्तावत्किमपि कर्तुं नाऽलं स्मः। धर्म्यं जीवनं च बाह्यैः कैश्चित्साधनैर्नाप्यते। हृदये हि धर्मस्य वसतिः[4]। यदि संसारे साफल्यमिष्यते तर्हि धर्मः प्रचेतव्यः। अयमाश्रमो धर्मप्रचये समुचितं साहायकं करिष्यति, भूयसा तु सेवाधर्ममुपदेक्ष्यतीति।

आश्रमवैशिष्ट्यम्

अत्र महात्मना कानिचिद् व्रतानि विहितानि तानि हि न केवलं प्रतिषेधस्वरूपाण्यपि तु विधिप्रतिषेधोभयात्मकानि। नवसंख्यानि तानीमानि भवन्ति।

१. जाग्रोऽविचिण्णल्ङित्सु इति गुणः क्तिनि प्रतिषेधविषये। तेन जागृतिरिति केषांचित्प्रयोगः प्रामादिकः।
२. नद्या इत्यर्थः। अथ नदी सरित्। तरङ्गिणी शैवलिनी तटिनी ह्रदिनी— इत्यमरः।
३. प्रत्युपमृष्टात्तिष्ठतेर्णिचि लुङि रूपम्।
४. वस निवास इति धातोरौणादिकोऽतिप्रत्ययः। वास इत्यर्थः। वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने—इति मेदिनी।

१. सत्यव्रतम् । सामान्यतोऽसत्यस्यानुक्तिरेव न पर्याप्नोति । सत्यं परिशीलयता जनेनेदमप्यवधेयं यद्देशहितायापि न कश्चिदतिसन्धेयः । स्यान्नाम सत्यव्रतपालनाय प्रह्लादेनेव पितुः सुधन्वनेव वा मातुर्वचः कदाचिन्नाङ्गीकरणीयं भवेदिति ।

२. अहिंसाव्रतम् । अहिंसाव्रतपूर्तये प्राणिमात्रस्यानुपघात एव न पर्याप्नोति । अन्याय्यवृत्तीनपि न हिंस्यात् । तेभ्यो मा क्रुधत्, अपि तु तेषु स्निह्येत् । मातापित्रो राज्ञोऽन्यस्य वा कस्यचिदन्याय्यमाचरणं प्रतिरोद्धुमुपायस्त्ववश्यमास्थेयः, परमन्याय्याचारो न मनागपि विप्रकार्यः । अन्याय्याचारं प्रेम्णा जयेत् । यावदत्याचारो[1] न विजीयते तावत्सर्वं सहेत । वधदण्डमपि ग्रहीतुमुद्युञ्जीत ।

३. ब्रह्मचर्यव्रतम् । ऋतेऽस्माद्व्रतात्पूर्वयोर्द्वयोः पालनमप्यसंभवि । एतद्व्रतमनुपालयताऽनृज्व्या दृष्ट्या परकलत्रं नेक्षणीयमित्येव न पर्याप्नोति । इन्द्रियविक्रियां तथा नियच्छेद् यथा सङ्कल्पेऽपि न सा संभवेत् । पाणिगृहीत्यामपि[2] कामवृत्तिं विहाय मित्र इव वर्तेत ।

४. रसनेन्द्रियवशीकारव्रतम् । अनियम्य रसनां सद्व्रतान्तराणामपि परिग्रहो दुर्लभः । एतद्व्रतमनुपालयता दृढमवधारणीयं शरीरस्थितिरेव भोजनेनार्थं[3] इति । शुद्धमदुष्टञ्च भुञ्जीत । इन्द्रियविकृतिकारकं राजसं तामसं च भोज्यं परिहर्तुं प्रयतेत ।

५. अस्तेयव्रतम् । परपरिग्रहामोष एवास्तेयं न, अपि तु यदि वयं किञ्चिदनपेक्षितमुपाददमहे तदपि स्तेयं भवति । सर्वेषां नः कृते

---

१. आचारमतिक्रान्तोऽत्याचारः पुरुषः । अत्यादयः क्रान्ताद्यर्थे द्वितीया इति प्रादिसमासः ।

२. भार्यायामित्यर्थः । पाणिगृहीतोऽस्याः । पाणिगृहीती भार्यायाम् इति वार्तिकेन ङीष् ।

३. अर्थः प्रयोजनम् । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु—इत्यमरः ।

तावन्मात्रं जगति संविधीयते विधात्रा यावन्मात्रं नितान्तमपेक्षामहे।

६. अपरिग्रह[1]व्रतम्। निःस्वत्वं वस्तुजातस्यानङ्गीकार एव वाऽपरिग्रहो न भवति। शरीरस्थित्यर्थमनपेक्षितस्य वस्तुनः परिहारोऽप्यपरिहार्यः। रुच्यर्थं[2] न किञ्चिद्धारयेत्।

७. स्वदेशवस्तुप्रयोगव्रतम्। अहिंसाव्रतेन मानवेन विदेशविनिर्मिताः पदार्था यन्त्रनिर्मिताश्चाप्रयोज्याः। यन्त्राधीशा स्वार्थसिद्धये कर्मकरान्बाधन्ते। रुज्यन्ते च यन्त्रेषु कर्मकराः। यन्त्रनिर्मितेषु वस्तुषु निकृष्टवस्त्वन्तरसंसृष्टिरपि बह्वी भवति। यन्त्रनिर्मितवस्तूनां भूम्ना विनियोगोऽपि बहुलो भवति। तेनास्तेयापरिग्रहयोर्व्रतयोरनुष्ठानमप्यशक्यतामापद्यते। विदेशवस्तुविनियोगेन प्रसाधने[3] रुचिरुदेति परिकर्म[4]रसिकत्वं चोपजायते। तेन ब्रह्मचर्यव्रतं हिंस्यते। स्वदेशवस्तुविनियोगेन न किञ्चन हार्यते। भरतवर्षीयं धनं भारते वर्ष एवावतिष्ठते, देशान्तरं न संक्रामति। दुर्गताः क्षुधावसन्नास्तपस्विनशिल्पिनश्च भुक्तिं लभन्ते।

८. निर्भीकताव्रतम्। नहि भीरुः सन् सत्यव्रतं पालयितुं पारयति। तेनैतदाश्रमस्थैर्निर्भीकताव्रतं चरितव्यम्। राज्ञो वा, चोराद्वा, बान्धवाद्वा, मित्राद्वा, हिंस्रा[5]च्छ्वापदाद्वा[6], मृत्योरपि वा न तैर्भेतव्यम्। तैरात्माऽऽत्मबलेनैव रक्षणीयः।

---

१. परिग्रहो मूलधनम्। पत्नीपरिजनादानमूलशापाः परिग्रहाः—इत्यमरः।

२. रुचिर्दीप्तिः शोभेत्यनर्थान्तरम्।

३. अलङ्काररचनादिकृतशोभायामित्यर्थः। आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्—इत्यमरः।

४. उद्वर्तनादि। परिकर्माङ्गसंस्कारः—इत्यमरः।

५. हिंस्रो हिंसनशीलः। घातुक इति यावत्। नमिकम्पिस्म्यजसकमहिंसदीपो रः इति ताच्छीलिको रप्रत्ययः।

६. श्वापदो वन्यः पशुः। शुनो दंतदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः।

  

९. स्पृश्यत्वभावनाव्रतम्। चर्मकारादयोऽन्त्यजा अस्पृश्या इति रूढिः। इदं हि हिन्दुजातेर्महद् दूषणम्। सर्वे मानवा विश्वसृजः प्रजाः। कश्चिदेकां वृत्तिमुपजीवति, कश्चिदन्याम्। तत्तद्वृत्तयः सर्वे तेऽपेक्ष्यन्ते। वृत्तिविशेषवशात्तर्हि कश्चित् स्पर्शानर्हो न भवति। तेनैतदाश्रमस्थैरन्योन्यस्मिन्[1] समं व्यवहरणीयमिति।

इमानि व्रतानि विशेषतोऽध्यापकवर्गसमुन्नतये प्रकल्पितानि। अध्येतॄणां विषये याऽऽश्रमव्यवस्थितिः सेदानीमुच्यते। आ चतुर्थाद्वर्षात्प्रवेष्टुमर्हैश्छात्रैरत्राध्ययनं परिसमापयितुं दश वर्षाण्युष्यते। बालाः पितृभ्यो बन्धुभ्यश्च पृथक् क्रियन्ते। पितरस्तेषु स्वाधिकारं विजहति। बालाः कदाचिदपि तान्द्रष्टुं नोपगच्छन्ति। ते साधारणानि वासांसि वसते[2], निरामिषं साधारणञ्च भोज्यं भुञ्जते। रूढ्यनुसारतस्तत्र च्छात्राणामनध्यायदिवसा न सन्ति परं प्रतिसप्ताहमध्यर्धदिवसं विश्रान्ताध्ययनास्त उत्पादिकां कामपि कृत्यां[3] कुर्वन्ति। प्रतिवर्षं मासत्रयं ते भरतवर्षे पादचारेण विचरन्ति। सर्वैश्छात्रैर्हिन्दीभाषा द्राविडभाषाश्चावश्यं शिक्षणीयाः। आङ्गलभाषाऽपि गुणीभूता तैर्बोद्धव्याः। नागर्यादयस्तेलङ्गान्ताः पञ्च लिपयोऽपि यथावद् ग्रहणीयाः। ते तत्र स्वभाषयेतिहासं, भूगोलं, गणितम्, अर्थशास्त्रं संस्कृतञ्चाध्याप्यन्ते। कृषिं कर्तनं वानञ्चापि शिक्ष्यन्ते। पर्यवसितेऽध्ययने तेऽध्यापका इव निर्वोढुमिच्छन्ति चेत् कामं तथा कुर्युः, नोचेदाश्रमं विजह्युः। विद्या च सर्वा निःशुल्कमेव वितीर्यते। धर्मविषयेऽत्र कापि यन्त्रणा नास्ति। सर्वे आश्रमस्थाः कुलक्रमादागतं धर्मं यथेष्टमनुतिष्ठन्ति। अत्र प्रातः सायञ्चेश्वरोपासा[4] क्रियते, परं यस्य

---

१. वैषयिकी सप्तमी। वर्तनेऽर्थे व्यवहरतिरकर्मकः। यथा—कथं कार्यविनिमयेन व्यवहरति मय्यनात्मज्ञः इत्यत्र मालविकाग्निमित्रे।

२. वस आच्छादने इति धातोरादादिकाल्लटि रूपम्।

३. कृत्या क्रिया। कृञः श च इति क्यप्। मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः इति मेघदूते।

४. गुरोश्च हलः इत्यप्रत्ययः। उपासा उपासनं वरिवस्या।

यो विधिरभिमतः स तेनैवोपासीतेत्यभ्यनुज्ञायते । एवमनितर-साधारणोऽयमाश्रमो देशाभ्युत्थान[1] उपकरणीभावं गमिष्यतीति को नाम संदिग्धे ।

लोकव्यवहार-प्रवृत्तिः

कञ्चित्कालं महात्मा स्वस्मिन्नाश्रम एव न्यवात्सीत् तत्रत्यं कार्यजातं चावैक्षत । कादाचित्कतयैव स्थानान्तर-मगमत् । कमपि समाजं नागच्छत् । कस्मिन्नपि विश्वजनीने[2] कर्मणि न प्रावृतत् । एवं सति भरतवर्षीयेषु राजकार्येष्वशक्तो वा राजभीतो वा महात्मेति केचिदतर्कयन् । अस्पृश्यताया निवर्तकानां विधवापुनरुद्वाहादेश्च प्रवर्तकानां संशोधकानां कक्षां नातिक्रामतीति च बुद्धिमकुर्वन् ।

एवं गच्छति काले शिवपुर्यां वाराणस्यां हिन्दुविश्वविद्यालय-प्रतिष्ठापनकृतोद्योगः पण्डितः श्रीमदनमोहनो मालवीयो द्वासप्तत्युत्तर-नवशतोत्तरसहस्रमिते संवत्सरे माघप्रतिपदायां राजप्रतिनिधिना लार्ड् हार्डिञ्जमहोदयेन तदाधारशिलां प्रतिष्ठापयितुं संभारान-कार्षीत् । पुण्येऽस्मिन्नवसरे संनिधातुमनेके राजानो मूर्धाभिषिक्ता उच्चैःपदाधिकृता इभ्याश्च यतस्ततः परापतन् । कथानायको महात्माऽपि तत्र संन्यधीयत । तत्र प्रथमेऽहनि मिथिलाधिपेनाधिष्ठितायां सभायां वदतां वराः केचिदेतद्देशमुखरा[3] मञ्जुवाचा स्वं स्वमभिधेय-मभ्यधुः । अपरेद्युर्विद्यालयाधिकृतैरुपदिशतु नो भवानिति विज्ञप्तो महात्मा यां सत्यां पथ्यां च वाचं प्रव्यक्तमत्रस्तश्चावोचत् तां निशम्य भरतदेशीयानां संशयाश्छिन्नाः अवेदिषुश्च ते भरतवर्षोद्धार औत्कटयमस्याभिलाषस्य । एवं हि तत्रभवान् व्याख्यातुमुपाक्रमत—

---

१. देशसमुन्नतिरित्यर्थः ।

२. विश्वस्मै जनाय हितं विश्वजनीनम् । आत्मन्विश्वजनभोगोत्तरपदात्खः ।

३. मुखमस्यास्तीति मुखरः । खमुख—इनि रः । नायक इत्यर्थः । तथा च प्रयोगः—यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते इति ।

अयि श्रोतृमहाभागाः ! श्रीमत्या वासन्तीदेव्या अनर्गलं भाषणं श्रुत्वा विश्वविद्यायोऽयं समुन्नतेः परां काष्ठामधिगमिष्यतीति न प्रत्येतव्यम् । इह लब्धप्रवेशाः प्रविविक्षवो वा विद्यार्थिनो विदाङ्कुर्वन्तु, यस्याध्यात्मिकस्य जीवनस्य कारणादयं नो देशः प्रख्यातिं गतस्तद्वाचोपदेष्टुं न शक्यते । यमर्थं भरतवर्षेण भूमण्डलाय संदेक्ष्यमाणं प्रत्येमि स वाचा संदेष्टुं न पार्यत इति । अवसितं वक्तृत्वप्रयोजनमिति मन्ये । साम्मनस्याय[1] सौमनस्याय[2] चेदानीं यत्नो विधेयः । यदि हीयमानं हिन्दूनामव्याजसारल्यं रक्षणीयन्तर्ह्यर्याचारविचारयोरैक्यं सम्पादनीयम् । तदिदमुपोद्घातमात्रम् । इदं तु विवक्षामि —इह भव्यायां[3] भुवि पवित्रायामस्यां पुरि स्वदेशजानां पुरस्तादवस्थाय देशान्तरीयवाक्प्रयोगो ह्रेपण इति मां प्रतिभाति । यैरत्र व्याख्यातृभिराङ्गली वाक् प्रायोजि तेषामभिप्रेतं कियद्भिर्जनैरबोधीति यदि परिक्षेय तर्हि स्वल्पा एवाभुत्सतेत्युपलप्स्यते । मुम्बापुर्यामतीते काङ्ग्रेसोपवेशनेऽहमुपातिष्ठम् । तत्र महति जनसंनिपाते हिन्दीभाषयैव क्रियमाणानि व्याख्यानानि तच्चेतसि पदमलप्सत नेतराणीति श्रद्धातुमर्हन्ति भवन्तः । इदञ्च मुम्बापुरीमधिकृत्य ब्रवीमि यत्र लोको हिन्दी न भाषते, न वाराणसीं यत्र सर्वे हिन्दीमेव भाषन्ते । श्रद्दधेऽत्र विद्यालये देशभाषयैवोपदेशे यतिष्यन्तेऽधिष्ठातार इति ।

इदं चात्र चिन्त्यम् । काङ्ग्रेस इति सदसा स्वराज्यप्राप्तिः प्रतिज्ञाता । अखिलभरतवर्षीयकाङ्ग्रेससंसद् मुस्लिमलीग् इत्याख्या परिषच्च स्वं स्वं कृत्यं कुर्वाणे भरतभूमिजानां कार्यपदवीमुपदेक्ष्यतः । परमिदमनावेद्य न मे परितोषो यद्वार्तापत्रेषु लेखैर्न किमपि कार्यम् ।

---

१. संगतं मनोऽस्येति संमनाः । माता भवतु संमनाः इति श्रुतेः । संमनसो भावः साम्मनस्यम् । समो मतिमनसोः इति गणसूत्रेण ष्यञ् ।
२. सुमनसो भावः सौमनस्यम् । प्रसादप्रवणता हितकाम्या वा ।
३. भवितुमर्हतीति भव्या कल्याणी । भव्यगेय—इत्यादिना कर्तरि यत् ।
४. बुध अवगमने इति धातोर्दैवादिकाल्लुङि रूपम् ।

न हि तैः स्वराज्यावाप्तिः शक्या कारयितुम् । अस्माकं चरितान्येव स्वराज्ये नोऽधिकुर्युः ।

इदमपरमवधेयम् । ह्यः सभापतिना नरेशेनैकेन भरतवर्षस्य दारिद्र्यमुपवर्णितम् । इतरैरपि कैश्चित्स्वभणितिभिस्तदुपवर्णनाऽनुमोदिता । परं यस्मिन्नुज्ज्वले श्रीमति मण्डपे राजप्रतिनिधिनाऽऽधारशिला प्रतिष्ठापिता, तत्र भवद्भिः किमदर्शि । यदि पेरेस[१]रत्नकराणामग्र्यो[२]ऽपि कश्चित्तत्राभविष्यन्नूनं रत्नभाभि[३]स्तस्य चक्षुःप्रतिघातोऽभविष्यत् । हीरकमौक्तिकादिप्रचयं वहत इमानीश्वरान्महेश्वरांश्च दृष्ट्वा भरतवर्षीयाणां कोटिशो जनानां दशां च मनसि कृत्वा इदमेवैनानभिधित्सामि — भ्रातरः ! यावल्लक्षशोऽकिञ्चनेभ्यः[४] स्वदेशजेभ्य इमानि हीरकमौक्तिकादीनि स्वस्माच्छरीरादवरोपयितुं नोद्युञ्जते भवन्तस्तावदस्य देशस्याभ्युत्थानमसंभवि । लार्डहार्डिञ्जमहोदयः सम्राट् श्रीजार्जः पञ्चमो वा नेच्छति राजभक्तिप्रदर्शनाय वयं त्रिचतुरा रत्नमञ्जूषा विरिच्यापादचूलं रत्नानि प्रणिधाय तेषां सन्निधौ समुपतिष्ठेमेति ।

इदमपीह विवेच्यम् । इदं हि नः सर्वान् द्वित्रान् दिवसान् उदवेजयत् — श्रीमतो राजप्रतिनिधेरेभिः पथिभिर्यानावसरे सर्वे जनाः पर्याकुला आसन् । स्थाने स्थानेऽपसर्पा[५] न्ययुज्यन्त । सायुधाः

१. इदं फ़्रांसदेशस्य राजधान्या नाम ।
२. अग्र्यो मूर्धन्यः । श्रेष्ठ इति यावत् । अग्राद्यत् इति च्छन्दसि विहितत्वादस्य श्रुतिविषयत्वमेव स्यात् । परं नैतदस्ति । छन्दोवत्कवयः कुर्वन्ति इति हि स्माह भगवान्भाष्यकारः । दृश्यन्ते च कवीनां प्रयोगाः— तदङ्गमग्र्यं मघवन्महाक्रतोरमुं तुरङ्गं प्रतिमोक्तुमर्हसि इति । उपेयुषः स्वामपि मूर्तिमग्र्याम् इति च ।
३. भासते क्विपि भाः इति निष्पद्यते । भिसि रुत्वयत्वे । ततो यकारलोपः ।
४. नास्ति किञ्चनास्येति । मयूरव्यंसकादिः ।
५. चारा इत्यर्थः । यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः चारश्च गूढपुरुषश्च —इत्यमरः ।

प्रहरिणश्चाजागरुः । इदं सर्वमवलोक्याहं चकितोऽभूवम् । असकृन्मे मनसि प्रश्नोऽयमुदगात्—किमित्यस्मास्वेवमनाश्वास[1] इति । एवं सततं मरणमाशङ्कमानस्य लार्डहार्डिञ्जमहोदयस्य जीवितोत्सर्ग एव वरं न पुनर्जीवितम् । परं प्रभविष्णोः सम्राजः प्रतिनिधिना तेन मरणमपि दुर्लभम् । स्यादेतत्स उच्छ्वसनमात्रं बहु मन्यत इति । अपसर्पैरस्माकमनुसारः किंहेतुक इतीदानीं विमृश्यम् । क्रुध्यद्भिर्गर्जद्भिः पाणिपादं ताडयद्भिरन्यद् वा किमपि कुर्वद्भिरस्माभिः स्मरणीयं राज्यविप्लवकरो जनवर्ग उन्मादवेगजन्य इति । एतद्वर्गीयाणां स्वदेशवात्सल्यमनुमोदे । यदिमे स्वदेशानुरागपरवशा मृत्युमपि न गणयन्ति तदहमाद्रिये । परं निवेदये नैतया विकृतयाऽराजकतया नो हृदि पदं करणीयम् । शासितृमहोदयेभ्यो विवक्षितोऽर्थो विस्पष्टं निर्वक्तव्यः । परं यदि ते तन्न रोचयेयुस्तदर्थं यं दण्डं निपातयेयुस्स सहर्षं सोढव्य इति । अहं कामये राज्ञां प्रजानां च परस्परमप्रत्ययो[2]ऽपेयादिति ।

पौरुषेणैव कदाचित्स्वराज्यमधिगंस्यते[3], न जातु प्रतिग्रहेण भिक्षया वा । आङ्गलसाम्राज्येतिवृत्तमालोच्यताम् । स्वातन्त्र्यप्रियमप्याङ्गलसाम्राज्यं स्वातन्त्र्येऽनुत्तिष्ठमानेभ्यो[4] न स्वातन्त्र्यं दित्सतीति ।

स्वराज्यार्थः समुद्योगः

त्रिसप्तत्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे स्वराज्यप्राप्त्यर्थो महान् प्रयत्नः प्रावर्तत । यत्र तत्र स्वराज्यसमितयः प्रतिष्ठामलभन्त । हृदयग्राहीणि व्याख्यानान्यक्रियन्त । नेतारः स्वं स्वं समुत्साहं व्यजृम्भयन्त ।

---

१. अविश्वास इत्यर्थः । विस्रम्भाभाव इति यावत् ।
२. अप्रत्ययोऽविश्वासः । प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु—इत्यमरः ।
३. प्राप्स्यत इत्यर्थः । गमेरिट् परस्मैपदेषु इति परस्मैपदेष्विड्विधानात्तदभावे न ।
४. अनुद्युञ्जानेभ्य इत्यर्थः । पुरुषकारविरहितेभ्य इति यावत् । उदोऽनूर्ध्वकर्मणि इत्यात्मनेपदम् ।

अत्रार्थे प्रयस्यन्तीं श्रीवासन्तीं देवीं लोकेऽभ्यर्हणीयतां गच्छन्तीं विलोक्य शासितारः संभ्रमं[1] संमोहं चापद्यन्त। संभ्रान्ताः संरब्धाश्च[2] त इमां झटिति कारां प्रावेशयन्। बन्दीकृतामेतां श्रुत्वाऽक्षुभन् भरतखण्डजाः प्रजाः। अवृधच्च स्वराज्याभियोगः[3]। एवमवस्थिते साम्राज्याधिकृता भरतवर्षराज्याधिकृताश्च मिथः परामृशन् भरतवर्षीयाः स्वदेशं शासितुं विभवन्ति न वेति। भरतवर्षमन्त्री श्रीमाण्टेगूमहाशयोऽचिरेण भरतभुवमलङ्करिष्यतीति प्रवृत्तिरश्रूयत।

श्रीगान्धिमहाभागेनैतद्देशीयाः स्वराज्यार्हा इत्युपपादयितुमनारतं व्यवसितम्। पत्तनानि ग्रामांश्च गामं गामं स्वराज्यसन्देशं च वाचं वाचं स महात्मा विश्रमं नालब्ध। प्रार्थनापत्रञ्चैकं प्राकाशयद् यस्यायमाशयः—वयं काङ्ग्रेसस्वराज्यविधानं सम्यग् बोधामः। काङ्ग्रेसोपन्यस्तस्य स्वराज्यस्य संस्थापनाऽऽवश्यकीति नो मतिः। यावच्च वयं स्वराज्यं न विन्दामहे, तावदाङ्ग्लशासनेन कुतो नस्तोषः। अतस्तान् संशोधनविषयानुपन्यासान् साधु समीक्ष्य स्वीकृत्य च सफलीक्रियन्तां नो मनोरथा इति। कोटिशो जनैः श्रीगान्धिप्रयुक्तैरेषु प्रार्थनापत्रेषु स्वहस्तो दत्तः। राज्यतन्त्राधिकृता महात्मन इदं कर्म नारोचयन्। उद्घोषितं च तदानीं महात्मना—एतानि पत्राणि वण्टयन्तस्तत्र[4] स्वहस्तं वा ददतो जना राजविद्रोहिण इति कृत्वा कारावासमर्हन्तीत्यध्यवस्यन्ति[5] चेच्छासितारस्तर्हि यथेष्टमाचरन्तु।

---

१. संभ्रमः साध्वसम्। संभ्रमः साध्वसेऽपि स्यात् इति विश्वः। तथा च किरातार्जुनीये प्रयोगः—मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः इति।

२. संरब्धाः कुपिताः।

३. अभियोग उद्योगः। तथा च दशकुमारचरिते प्रयोगः—अर्थपतिर्व्यवहर्तुमर्थगौरवादभियोक्ष्यते इति।

४. वट विभाजने लज प्रकाशने। वटि लजि इत्येके इत्येकीयं मतमाश्रित्य प्रयोगः।

५. निश्चिन्वन्ति। अध्यवपूर्वः स्यतिर्निश्चयेऽर्थेऽपि वर्तते। तथा चोत्तररामचरिते प्रयोगः—कथमिदानीं दुर्जनवचनादेवमध्यवसितं देवेन इति।

अयन्त्वारम्भो विहन्तुं[1] न शक्ष्यत इति।

यदा भरतवर्षमन्त्री भरतभुवमागात् तदा सर्वाणि पत्राणि समाहृत्य तत्सकाशे संन्यधाप्यन्त। तानि दृष्ट्वा मन्त्रिमहोदयोऽजानात् स्वराज्यस्य[2] कियदुत्कण्ठन्ते भरतदेशजा इति।

देहलीयुद्ध-संमन्त्रणसमाजः

चतुःसप्तत्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे लार्ड् चेम्सफोर्डमहोदयो देहलीराजधान्यां महतीमेकां सभामकारयत्। अत्र सभायां बहवो मुखराः सामन्ता इभ्याश्च न्यमन्त्र्यन्त। कथानायको महात्माऽपि निमन्त्रितस्तत्र समायात्। शर्मण्यदेशमायुध्यमानस्याङ्गलदेशस्य कया विधया भरतभुवा धनैर्वा जनैर्वोपकरणीयमिति विचारस्तत्र प्रास्तूयत। तत्र प्रथमेऽह्नि क्रियमाणानुपन्यासान्महात्मा बलवद् व्यरुणत्। यतोऽत्राहंतामग्रेसरो लोकमान्यस्तिलको नाकारितोऽतो नेयं राष्ट्रसभेत्युक्त्वोत्थाय प्रायात्। तं प्रयान्तं दृष्टवतां सभास्ताराणां[3] चेतांसि परिप्लवानि[4] समजायन्त। लार्डमहोदयोऽपीतरेऽपि तस्यानुकुर्युरिति भीतिमापत्। पराह्णे स महात्मानमाकारयत्। वस्तुस्थितिं चानुबोध्यासान्त्वयत्। द्वितीयेऽह्नि महात्मा सभायामासीदत्। तत्र च वल्लभया हैन्दव्या वाण्या विचित्राणि गाम्भीर्यवन्ति सारवन्ति च वचांस्यवोचद् येषामयं संक्षेपः—भरतवर्षशासनपद्धतौ भरतवर्षीयाणामिष्टं तदपेक्षितं वा संशोधनं करिष्यत इति लार्डचेम्सफोर्डमहोदयो नः प्रत्याययति। साम्राज्यस्य कृते समञ्जसं साहायकं च याचते।

---

१. उपरोद्धुमित्यर्थः। विपूर्वो हन्तिरुपरोधने वर्तते। उदन्वदाकाशमहीधरेषु गतिर्विजघ्ने नहि तद्रथस्य इति रघौ।

२. अधीगर्थदयेशां कर्मणि इति कर्मणि शेषे षष्ठी। कठिधातुरुत्कण्ठापूर्वके स्मरणे वर्तते।

३. सभासदामित्यर्थः। सभासदः सभास्तारा सभ्याः सामाजिकाश्च ते—इत्यमरः।



४. तरलानीत्यर्थः। चञ्चलं तरलं चैव पारिप्लवपरिप्लवे—इत्यमरः।

अतोऽहं संमन्वेऽस्याम यदि सर्वैरस्माभिः साम्राज्यस्यावदातेन चेतसा प्रकाशेन च विधिना साहाय्यं करणीयमिति। यतः प्रत्यासन्ने भविष्यति काल उपनिवेशान्तरवासिन इव वयमपि साम्राज्येऽन्तः स्वराज्यभाजो भवितुमाशास्महे। प्रतिज्ञातश्च लार्डमहोदयेन करिष्यमाणानि संशोधनानि लोककाङ्ग्रेसयोरभिमतानुरन्यासानन्वायत्तानीति। यद्येवं प्रत्येतु लार्ड् महोदयः कृतवेदितायाः कारणाद् विश्रुत[1]मिदं वर्षं साम्राज्याय साह्यदाने नावहास्यत इति। अहं वेद्मि भारते वर्षे ईदृशा बहवः सन्ति ये भरतवर्षोद्देशपूर्तये क्रियमाणं स्वार्थहानं न बहु मन्यन्ते मन्यन्ते च यत्र साम्राज्येऽन्तः स्थित्वा वयमाशावधिमधिगन्तुमिच्छामस्तदर्थं सत्यामपेक्षायामात्मोपहरणीय इति। इदन्तह्यर्थादापद्यते भाविन्या विपदः साम्राज्यं परित्रातुं यदि वयं सर्वात्मना प्रवर्तेमहि तदा त्वरितं स्वोद्देशमभिवत्स्यामि इति। अयं न उत्सर्गः प्रत्याशां जनयति। सा च स्वराज्यावाप्तिः। मयेदमवश्यवाच्यमनया प्रत्याशयैव प्रयुक्तोऽहं साम्राज्यस्य साहायकं कर्तुमुद्यच्छ[3] इति।

युद्धसाह्यम्

सरलचेता महात्मा कापटचमसंदिहानो लार्डचेम्सफोर्डमहोदयस्य वचसि व्यश्वसीत्। जिह्मनीतेरुद्विजमानो[4]ऽनृतं परिहरमाणोऽयं महाभागः स्वहृदयानुमानेन तमपश्यत्। बहवो भरतवर्षजा महात्मन इमां कृतिं नारोचयन्। लोकस्याभ्यर्चितस्तिलकोऽपि महात्मानमुद्दिश्य पत्र-

---

१. विश्रुतं प्रख्यातम्। विपूर्वः शृणोतिः प्रसिद्धौ वर्तते। तथा च प्रयोगः—वरमेकः कुलालम्बी यत्र विश्रूयते पिता इति।
२. उपक्रमिष्याम इत्यर्थः। वृद्भ्यः स्यसनोः इति वा परस्मैपदम्। न वृद्भ्यश्चतुर्भ्यः इतीण्निषेधः। अभिरभागे इति कर्मप्रवचनीयत्वे तद्योगे द्वितीया।
३. समुदाङ्भ्यो यमोऽग्रन्थे इत्यात्मनेपदम्। उद्युञ्ज इत्यर्थः।
४. ताच्छील्यवयोवचनशक्तिषु चानश् इति ताच्छील्ये द्योत्ये कर्तरि चानश्।

मेकमलेखीद् यत्रैतमर्थं न्यभान्त्सीत्[1]—यदि भवान् स्वराज्येप्सया शासितॄणां साहाय्यं चिकीर्षति तर्ह्ययमर्थः पत्रमारोप्य व्यवस्थापनीयः। इमां च संविदं[2] ते कारयितव्याः—ये सैनिका इतो देशाद्योत्स्यन्ते त आङ्ग्लसैनिकाधिकारानाप्स्यन्तीति। तदाहमपि भवतः साह्यं करिष्यामि। महाराष्ट्रादेव केवलाल्लक्षशः सैन्यानुपकल्पयिष्यामि। नोचेत् प्रतिसैन्यं सप्तदश रूप्यकानर्थदण्डं दास्यामीति। इदमधिगम्य महात्मा ऽवोचत्—शासितॄष्वैकान्त्येनाविश्वासो नोपपन्न इति मे मतम्। कामं ते युद्धे परिनिष्ठिते प्रतिश्रवं न पालयेयुः। किं तेन। आत्मनः पातित्यमेव ते साधयिष्यन्ति। नास्मदर्थो हिंसिष्यते। स्वधर्मस्तु चरितो भविष्यतीति।

एवं सुविचिन्त्य महात्मा समाचारपत्रेषु सर्वजनप्रयुक्तये प्रबन्धमेकं प्राचकाशत्। तत्र चैतमर्थं न्यबघ्नात्—अद्य भारतं वर्षं स्वस्य ब्रिटिशसाम्राज्यभागित्वमुपपादयितुमुन्मनः। परमिदमौन्मनस्यं वाचैव न व्यञ्जनीयमपि त्वात्मोत्सर्गेण प्रसाध्यम्। ब्रिटिशसाम्राज्योदयास्तमययोरायत्तेते भरतवर्षस्येष्टानिष्टे। यदीदं साम्राज्यं प्रणश्येत्[3], भरतवर्षीयाणामुत्सर्पिण्य आशा अपि भज्येरन्। अस्यां वेलायामेतद्देशप्रसूतैः स्वस्य युद्धवैशारद्यं विज्ञाप्यम्। यदि भरतभूमिजानां सैनिकानां साहायकेन साम्राज्याधिकृताः शर्मण्यदेशं पराजित्य विजयिनस्स्युस्तदोपपत्तिमतीं नः प्रतिज्ञामुपेक्षितुं न प्रगल्भिष्यन्ते। अस्य चात्मबलेः प्रतिफलमवश्यं लप्स्यन्ते भरतवर्षवास्तव्या इति। एतं प्रबन्धं प्रकाश्य महात्मा खेडां नाम मण्डलमयासीत्। तत्रस्थान्स्वानुरक्ताञ्जनान्युद्धकर्मणि व्याप्रियध्वमित्युपादिशच्च। स्वस्य तनूजस्य श्रीदेविदासस्य[4] च नामधेयं सैन्यनामावलिपत्र[5]

१. बन्ध बन्धने इति धातोर्लुङ् प्रथमैकवचने रूपम्।
२. संविदं प्रतिज्ञाम्। संविदागूः प्रतिज्ञानम्—इत्यमरः।
३. उपसर्गादसमासेऽपि णोपदेशस्य इति णत्वम्।
४. ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् इति ह्रस्वः।
५. सेनां समवैति सैन्यः सैनिकश्च। सेनाया वा इति ण्यः, पक्षे ठक्।

आरोपयत् । एवं हि तत्रभवत उपदेशेन फलितं यत् त्र्यहेणैव खेडायां पञ्चपञ्चाशदुत्तरत्रिशतोत्तरत्रिसहस्रसंख्यका[1] जना अस्त्राण्यगृह्णन् ।

भरतवर्षरक्षा-विधानम्

संगृहीतविपुलसामग्रीका वीतभया लार्डचेम्सफोर्डादयो[2] द्विषत्कपट-प्रबन्धनियमनच्छलेन नीतिविदां दमनमभिप्रयन्तो भरतवर्षरक्षेत्याख्यं विधानं व्यदधुः। इदं विधानमा शर्म्मण्ययुद्धपरिणतेः प्रवर्तिष्यते । परिणते च तस्मिन् तन्निरासः करिष्यत इति च प्राख्यायन् । एतच्चा-श्रित्य शतशो जनान् राजद्रोहिण इत्यभियुज्य कारासु न्यक्षिपन् । कः केनागसा गृहीत इति न कोऽप्यजानात् । सर्वत्र देशे हा हेत्युच्चै-राक्रोश उदचरत् । महात्मा तु युद्धान्त आसां बलात्कृतीनामन्तो भविष्यतीत्याशंसमानोऽवसरं प्रत्यपालयत् ।

रोलट्विधानम्

कालेनावसितमायोधनं जितञ्चाङ्गलैः । विजयं निमित्तीकृत्योप-कर्तृभ्यो भरतदेशजेभ्य उपदा काचित्प्रकल्पनीयेति राजकर्मणि व्यापृता अचिन्तयन् । एवं चिन्तयमा-नास्त उपायमेकमुपालप्सत । ते प्राड्विवाकश्री-रोलट्महोदयेनाध्यासितां समितिमेकां न्ययुञ्जत । एतद्देशावस्थिति-मुपलब्धुं प्रयतमानयानया समित्या सर्वत्र राजविद्रोह एवोन्नीतः । तदुन्नयं हेतूकृत्य राजविद्रोहशमनाय लार्डचेम्सफोर्डमहाशयस्त्वरितमु-पन्यासद्वयं प्रास्तुवीत । अस्य च रोलट्विधानमिति नामाकरोत् । प्रथमस्योपन्यासस्यायमाशयः—सभया सम्मन्त्र्य राजप्रतिनिधिर्य-दाभिलषेत् तदा स्थानं कालञ्चापरीक्ष्यैव मण्डलं शासतामधिकारिणां भरतवर्षरक्षाविधानेनैव प्रवर्तनमभ्यनुज्ञातुमोष्टे । द्वितोयस्तूपन्यासो-ऽतितरां भयावहः । तस्यायमाशयः—

---

१. आपोऽन्यतरस्याम् इत्यावन्तस्य कपि ह्रस्वो वा । तेन पक्षे सहस्रसंख्याका इत्यपि भवति ।

२. अत्र द्विषन्तः शर्मण्यदेशोद्भवा आङ्गलैः स्पर्धमाना अभिप्रेताः ।

१ – यदि कश्चित् प्रजाप्रकोपकरं लेख्यं धारयन्नुपलभ्येत तद्धारण-कारणं च निर्वक्तुं न क्षमेत तर्हि स वर्षद्वयं निष्ठुरं कारानिरोधं सहेत ।

२—यदि राजमन्त्रिणो महापातकीति दण्डितपूर्वं पुरुषं राजद्रोही-त्याशङ्केरंस्तदा तदुक्तं नावधास्यते । स चाविलम्बितं ग्रहीष्यते ।

३—यदि केचन राजद्रोहेण हेतुना दण्डितं जनं स्वैरमुपसर्पन्ति तमुपतिष्ठन्ते[1] च तर्हि तेऽपि दुष्कृतिन इति दण्ड्या भवेयुरिति ।

सभासदां विरोधमविगणय्य लार्डमहोदय इदमुपन्यासद्वयं विधान-तामनयत् । इदं च[2] विधानतामापन्नं क्षुभितं च भारतं वर्षम् । सर्वत्र कलिकातामुम्बापुर्यादिषु प्रख्यातेषु नगरेषु विधानमेतद्विरोद्धुं बृहत्यः सभा अक्रियन्त । सर्वे नेतार ऐकमत्येनेदमवादिषुः—अनेन विधानेन भरतविषयवर्तिनां स्वाच्छन्द्यस्य साधारणस्य स्वातन्त्र्यस्यापि च समु-त्सादो भविष्यतीति । विद्युत्प्रेरितवार्तापत्राणीतस्ततः संनिपतितानि, परमाग्रहग्रहिले लार्डचेम्सफोर्डमहाशये तानि न कमपि गुणमावहन् ।

एवं सत्युपेयप्रतिपत्त्यर्थमुपायान्तरमपश्यन्महात्मा स्वानुभूतममोघ-मस्त्रं सत्याग्रहमास्थातुं निरचिनोत्, अघोषयच्च यदि रोलट्विधानं न निरसिष्यते विधानान्तराण्यपि वयं व्यतिक्रमिष्यामः । प्रकाशं वा भङ्क्ष्याम इति ।

सत्याग्रहग्रहः

तत ऊर्ध्वं पञ्चसप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे फाल्गुने मासि बहुले[3] चतुर्दश्यां श्रीगान्धी, प्रतीक्ष्यः[4] पटेलः, धृतदेहेव शारदा श्रीमती

---

१. उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् इति मित्रकरणेऽर्थे तङ् ।

२. झटित्यनन्तरमापततो व्यतिकरद्वयस्य द्योतने चकारद्वयप्रयोगः । तथा च रघुवंशे प्रयोगः—ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः इति ।

३. बहुलः कृष्णपक्षः । बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति इति कुमारे ।



४. पूज्य इत्यर्थः । पूज्यः प्रतीक्ष्यः—इत्यमरः ।

सरोजिनी नायिका, धनद इवापरः श्रीयुतो यमुनादासश्च स्वहस्त-परिचिह्नितं पत्रमेकं प्राचोचरन् यत्रैतमर्थमलेखिषुः—रोलट् विधान-मितीदं स्वाधीनतां न्यायं चात्यन्तं विरुणद्धि । इदं हि प्रजानां जन्मतो लब्धानधिकारानाच्छिनत्तीति नो मतम् । अतो वयं प्रतिजानीमहे यदि रोलट्-विधानं प्रवर्तिष्यते नादः[1] कर्हिचिदनुवर्तितास्महे । अन्यान्यपि राजकीयविधानान्युल्लङ्घिष्यामहे । एवं सत्यपि सत्यमेवा-नुपधि[2] समाचरिष्यामः । कस्य चिज्जीवितेन धनेन वा न नोऽर्थ इति च संगिरामह[3] इति ।

प्रचरिते चास्मिन्नर्थे सर्वत्र भारते वर्षे महान् क्षोभः समवर्तत ।[4] यत्र तत्र सत्याग्रहसमितयो व्यरचिषत । दर्पाध्मात ऐश्वर्यमत्तो लार्डचेम्सफोर्डमहोदयो लोकमतमवधीरयतीति धर्षणेयं न सोढव्येति महात्मा मुद्रणयन्त्रविधानमभनक् । अधिकरणेऽनिवेद्यैव वार्तापत्रं प्रावर्तयत् । ततो निषिद्धानि कानिचित्स्वानि पुस्तकानि प्राकाशयत् प्राचारयच्च । तदैव चैत्रे मासि सितषष्ठ्यां सर्वत्र देशे विधानं प्रत्यमर्षः शोकश्च प्रकटयेयातामित्युदघोषयत् । तत्रामर्षादेः प्रकटनस्येमं क्रममपि निरदिशत्—चैत्रे मासि सितषष्ट्यां सर्वे जना जनश्रेणयश्च सर्वमा-ह्निकं कार्यं निवर्त्योपवसेयुः । अघस्य[5] हर्त्रे भगवते विधात्रे[6] स्वं दुःखं निवेदयेयुः, सम्प्रदायानुसारतो यथेष्टमुपासीरंश्च । एवं चायं सत्या-ग्रहदिवस इति ख्यापयितुं सर्वत्र कर्मनिवृत्तिः करणीयेति ।

देहलीस्था जना यदृच्छया चैत्रे कृष्णत्रयोदश्यां महात्मन इममा-

१. नैतदित्यर्थः ।
२. अव्याजम् इत्यर्थः । कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे—इत्यमरः ।
३. समः प्रतिज्ञाने इत्यात्मनेपदम् । प्रतिजानीमह इत्यर्थः ।
४. संपूर्वो वृतु वर्तने इति धातुरुत्पत्त्यर्थे रूढः । तथा च भगवति वेदे प्रयोगः—हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् इत्यादि ।
५. अघं दुःखमित्यनर्थान्तरम् । अंहोदुःखव्यसनेष्वघम्—इत्यमरः ।
६. क्रियाग्रहणमपि कर्तव्यमिति सम्प्रदानसंज्ञायां चतुर्थी ।

  

देशमन्वतिष्ठन्। स्थाने स्थाने समवेताः सहस्रशो जना औद्धत्यस्य स्वैरितायाश्च[1] हेतोः शासितृननिन्दन्। सर्वत्र तत्पत्तनस्थेषु महान-परितोष आसीत्। तस्य महतोऽपरितोषस्याभिव्यक्तिमसहमाना रक्षिणोऽकलहायन्त बहूंश्चानेनसो[2] जनाँल्लोहमुषिभिरघातयन्। एत-न्निशम्य क्रोधाविष्टाँल्लोकान् शमयितुं महात्मा देहलीं प्रति प्रस्थितः, परं तामप्राप्त एव गृहीतः, मुम्बापुरीं प्रति निर्वर्तितश्च।

महात्मन आसेधं पञ्चनदीया यावन्निशाम्यन्ति तावन्नितरां क्षुभ्यन्ति क्रुध्यन्ति च। कोपावेशं नियन्तुमक्षमाः केचिदयतचेतस उद्दामं समाचरन्ति, तुमुलं च कुर्वन्ति। अमृतसरसि कतिपयानि केतनानि विलु-ण्ठितानि। कतिपयानि च भस्मसात्कृतानि। चैत्रे मासि शुक्लैका-दश्यां सेनानीर्डायरः सैनिकैः समागत्य नगरमध्यास्त। सर्वत्रोपशमः समजनि। वैशाखसङ्क्रान्तिमुद्धवेनाभिनन्दन्ति हिन्दवः। तन्निर्वृत्तये च चैत्रत्रयोदश्यां जल्लोद्यानम् इत्याख्ये प्रकाशेऽवकाशे सम्मिलनं निरचिन्वन्। संनिपतिता जनाः सर्वे निरुपप्लवा निरायुधाश्चासन्। तेषु बहवः स्त्रियो बालाश्चाभूवन्। अतीतायां निशायां सेनापतिः सर्वजनीनाः[4] सभाः प्रत्यषेधत्। परं न कोऽप्यवेदीत्प्रतिषेधम्। सेना-पतिस्तु यन्त्रगुलिकाप्रक्षेपणीरादाय जल्लोद्यानमागात्। प्रबोधनमन्तरे-णैव च निरायुधेषु तेष्वाग्नेयचूर्णप्रक्षेपं प्रारभत। अयश्चाग्निविसर्ग आ चूर्णपरिसमाप्तेर्दशकला यावत् प्रावर्तत। यतोऽयं प्रदेशः प्रांशुभि-र्गृहभित्तिभिः परिक्षिप्तो[5]ऽस्तीत्यतो न कश्चित् पलायनेन प्राणान्

(margin: पञ्चन.दवैशसम्[3])

१. स्वेन ईरितुं शीलमस्येति स्वैरी। स्वादीरेरिणोः इति वृद्धिरेकादेशः। तस्य भावः स्वैरिता।
२. अविद्यमानमेनः पापमेषां ते, तान्। अनागस इत्यर्थः।
३. विशसति हिनस्तीति विशसः घातुकः। तस्य कर्म वैशसम्।
४. सर्वजनेभ्यो हिताः। सर्वजनाट्ठञ् खश्च इति खः। पक्षे सार्वजनिकमिति भवति।
५. परिवेष्टितः। वृत इति यावत्।

परित्रातुमशकत् । पञ्चशतं षट्शतं वा तत्र प्राणैर्वियुक्ताः । एतदतिरिक्तसङ्ख्याश्च क्षताः । परासून् क्षतविक्षतांश्चावेक्षितुं न तत्र कश्चनासीत् । एतत्कदनं[1] निमित्तीकृत्य समरोचितं सर्वेषां व्यथयितृ शासनं प्रावर्त्यत । आकाशयानेभ्योऽशस्त्रेषु मनुजेष्वाग्नेयास्त्राणि प्राक्षिप्यन्त । अभ्यर्हिता नागरा अधिकरणान्यकृष्यन्त, कशयाऽभ्यहन्यन्त, जानुभ्यां विसर्पणं च बलादकार्यन्त । एवं त उद्वेगकरीर्निकृतीरग्राहयिषत । उन्मादावेशाभिभूता इवाङ्गलाः शासितारोऽचेष्टन्त ।

एतत्प्रमापणमधिकृत्य महात्मा स्वस्मिन्वार्तापत्रे तरुणभरतवर्षमित्याख्येऽलेखीत्—अस्माभिर्न केवलं सहस्रस्य स्त्रीपुंसानामपि तु संख्यातिगानां विशसनं समचित्ततया भावयितुं योग्यैर्भाव्यम् । एवमेव वयं तत्पदमधिष्ठास्यामो यन्नापरैरतिशेष्यते । अत आशंसे सर्वेऽत्र व्यापृता हृदये धैर्यमाधास्यन्ति न त्वात्मानमवसादयिष्यन्ति, उद्बुध्य व्यापादनं[2]मपि सामान्यं जीवनव्यतिकरं गणयिष्यन्तीति ।

कतिचिन्मासान् प्रदेशान्तरस्थाः प्रवृत्तिनिरोधस्य हेतोः पञ्चनदवैशसं नावेदिषुः परं यदाऽवेदिषुस्तदा वज्रताडिता इव समिद्धमन्यवः समजायन्त । एतद् दृष्ट्वाऽऽङ्गला अपि जाताशङ्का अमृतसरसीयेषु[3] वृत्तेषु विषये तत्त्वोपलब्धये हण्टरमहाशयेनाध्यासितां समितिमेकामकल्पयन् । काङ्ग्रेसेनापि तादृशमेव समित्यन्तरं तथ्यानुसन्धानायाघटि । यद्यप्येतस्य समुत्सादनस्य कर्तॄणां यथोचितं निग्रहो राज्यहित आसीदिति व्यक्तम् । परं क्षमावान् श्रीगान्धी नैतावदपि प्रार्थयत । अधिक्षिपन्नपि स तेषु तैक्ष्ण्यं नाभजत, वैरशुद्धिञ्च[4] नायाचत । न

१. कदनं व्यापादनम् । तथा चोत्तरे रामचरिते प्रयोगः—तत्किं निजे परिजने कदनं करोषि इति ।

२. इदं स्वकर्मकं परकर्तृकं च बोध्यम् ।

३. अमृतस्य सरः अमृतसरः । अनोश्मायस्सरसां जातिसंज्ञयोः इति संज्ञायां समासान्ते टचि सत्यमृतसरसमिति भवति । तत्र भवेषु अमृतसरसीयेषु ।

४. वैरनिर्यातनमित्यर्थः ।

ह्युन्मत्ते कश्चिद् दुर्मनायते। परं स तत्रावरोध्यो यत्र हिंसितुं न प्रभवेत्। अतः श्रीगान्धी डायरस्य प्रत्याह्वानमेवैच्छत्[1]। डायरः स्व-स्मात्पदादवरोपित इति सत्यम्। परमंशदानैः समाहृतेन धनेन परि-तोषित इत्यपि सत्यम्।

खलीपत्वप्रकोपः

यूरोपसम्परायेण[2] भरतवर्षीया मुहम्मदीया महति कर्तव्यसङ्कटे निपतिताः। एकतस्तेषां भुवः परिवृढे[3] श्रीजार्जे सम्राज्यनुरागः, अपरतश्चाग्रण्यां गुरौ रोमाधीशे भक्तिः। यदाऽऽङ्ग्ला रोमाधीशस्य राष्ट्रं नाव-स्कन्त्स्याम इति समविद्रत[4] तदा मुहम्मदीयास्तेषां साहाय्यं प्रत्य-जानत। तुरुष्का यूरोपान्तर्वर्तिनि तुरुष्कस्थान एव यथापुरं तिष्ठेयुः, न केवलम् इस्लामतीर्थस्थानानि यथापुरं रोमाधीशेऽधि[5] स्युरपि तु मुहम्मदीयकोविदकृतमर्यादापरिच्छेदोऽरबदेशो, मेसोपोतामिया, सीरिया, पालिस्तीनेत्याख्याः प्रदेशाश्चेति भरतवर्षस्था मुहम्मदानुगाः प्रार्थयन्त। इदञ्च महामन्त्री लार्डजार्जो राजप्रतिनिधिश्च दृढमा-श्रृणुताम्[6]। परं यदा युद्धोपरमः समजनि तदा सर्वाः सन्धाः[7]

---

१. आङ्ग्लदेशाद् भरतभुवं प्रति प्रेषित आङ्ग्लदेशं प्रत्याहूयतां डायर इत्ये-वैच्छन्महात्मा।

२. सम्परायो युद्धम्। युद्धायत्योः सम्परायः—इत्यमरः।

३. परिवृढोऽधिपः। अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः—इत्यमरः।

४. प्रत्यजानतेत्यर्थः। विदिप्रच्छिस्वरतीनामुपसंख्यानम् इत्यात्मनेपदम्। वेत्तेर्विभाषा इति रुडागमविकल्पः।

५. कर्मप्रवचनीयेनाधिना योगेऽत्र सप्तमी। यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी।

६. प्रत्यजानातामित्यर्थः। आङ्पूर्वः श्रृणोतिः प्रतिज्ञाने वर्तते। तथा च याज्ञवल्क्यस्मृतौ प्रयोगः—साध्ये कुर्याद्यथाश्रुतम् इति। प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता इति सूत्रमप्यत्रार्थे लिङ्गम्।

७. प्रतिज्ञा इत्यर्थः। सन्धा प्रतिज्ञा मर्यादा—इत्यमरः।

प्रस्मृता:[1]। यदा च रोमाधीशेन सह करिष्यमाणाः सन्धिसमया[2] अप्रथन्त, एतद्देशजा मुहम्मदीया अव्यथन्त । अपरितुष्टाश्च ते खलीपत्वसमितिरित्याख्यां सृष्टिमसृजन् । पञ्चसप्तत्युत्तरनवशतो- त्तरसहस्रतमे वत्सरे मार्गशीर्षे कृष्णषष्ठ्यामखिलभरतवर्षीयखलीपत्व- सभाया उपवेशनं देहल्यामभूत् । श्रीगान्धी तदध्यतिष्ठत् । अव्याहत- ज्योतिषा प्रातिभेन[3] चक्षुषा सोऽपश्यत्—अयं मौहम्मदीयः प्रकोपो भरतवर्षाधिवासिनामैक्यसम्पादने साधनतां व्रजेदिति । इह भिन्न- जातीयानां जनानां संघटनं नितान्तं दुर्घटमासीत् । हिन्दूनां मुहम्मदी- यानां च परस्परं वैमनस्येन च्छिद्रेण नित्यमवकाशमलभन्ताङ्गलाः। एषां साम्मत्यस्य समानसरणेरनुसरणस्य च संभव एव नास्तीति ते दृढं व्यश्वसन् । तस्माद्यदा महात्मा हिन्दूनां मुहम्मदीयानां चोद्देशा- भिन्नतामुदघोषयत् तदा ते ससाध्वसमबुध्यन्त । नीतिविदां वर उदारधीः श्रीगान्धी हिन्दुप्रभृतीन् मुहम्मदीयानां पक्षपोषायेत्थं प्रैरयत् —अयि हिन्दवः पारसीकाः, ख्रिस्तीया अपरे च । यदि वयमेकजा- तिरिव जिजीविषामस्तर्हि य एकस्य वर्गस्यार्थः स सर्वेषामितरेषां भवेदितीष्यतेतमाम् । अर्थविशेषस्य न्याय्यत्वमेव तत्र निश्चेयं भवति नापरं किञ्चित् । अमृतसरसि हिन्दुभिः समं मुहम्मदीया अप्यदयं विशस्ताः । इदानीमुभयैस्तैरनभिसन्धिः सन्धिः करणीयोऽस्तीति । मुहम्मदीयाश्च सर्वप्रथममस्मिन् सम्मिलने प्राख्यापयन् न वयं शासि- तृभिः सहोद्योक्ष्यामहेऽस्माकमभियोगाश्चेन्न स्वीक्रियेरन्निति । एतच्च महात्माऽन्वमोदत ।

राजमन्त्रिणो भविष्यन्तमपायमपश्यन् । विलम्बितैर्वितरणैश्च स्वस्याः प्रयुक्तपूर्वाया नीतेः परिणतीर्निवर्तयितुं प्रायतन्त । ते

---

१. विस्मृता इत्यर्थः । प्रोपसृष्टः स्मरतिर्विस्मरणवृत्तिः । रूढियोगापहारिणीति रूढिरत्राश्रीयते । यौगिकार्थो नोपादीयते ।

२. संविद इत्यर्थः । समयाः शपथाचारकालसिद्धान्तसंविद —इत्यमरः ।

३. प्रतिभैव प्रातिभम् । व्यस्तरूपकम् । प्रतिभारूपेण चक्षुषेत्यर्थः । प्रज्ञादित्वा- त्स्वार्थेऽण् । प्रातिभादयः प्रज्ञादिषु इति काव्यालङ्कारसूत्रवृत्तौ वामनः ।

माण्टेगूचेम्सफोर्डविवरणश्रितं संशोधनविधानमेकं व्यदधुः। अनेन भरतवर्षीया मध्यवर्तिनि शासने प्रादेशिके च भूयःप्रभावभाजोऽक्रियन्त। राजाधिराजः श्रीजार्जः पञ्चम एतद् विधानं पौषे मासि कृष्णसप्तम्यामुद्घोषणयाभ्यनन्दत्। राजकीयाज्ञातिक्रमा मृष्यन्ताम्, सर्वे चापराधिनः क्षम्यन्तामिति तत्रभवान् स्वप्रतिनिधिं व्यजिज्ञपत्। प्रतिद्वन्द्विषु श्रद्दधानः श्रीगान्धीदं संशोधनविधानं व्यनक्त्याङ्ग्लदेशो भरतदेशे साधीयो[1] वर्तिष्यत इति मन्वानः सर्वांस्तदनुमननाय प्रायोजयत्।

परमचिराद् भ्रमोऽयमित्याः श्रीगान्धिन आशा इति व्यक्तमभूत्। राजाधिराजं प्रतिनिदधच्छ्रीचेम्सफोर्डमहाशयो न तदनुग्रहप्रवर्तनमवाधात्। संयतेषु विसर्जयितव्येषु कारागृहद्वाराणि वधार्थमेव व्यवृणोत्।

अनुपदमेव षट्सप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे वैशाखे शुक्लपञ्चदश्यां रोमाधीश आहितानामभिसन्धीनां वार्ता भरतभुवमागात्। राजप्रतिनिधिश्चामीभिरभिसन्धिभिर्मुहम्मदीया मनोहता[2] भविष्यन्तीत्यभ्युपागमत् परं तानप्रतिविधेयस्य विधेयता श्रेयसीत्युपादिक्षत्। ततोऽनन्तरमापतताऽमृतसरोत्रिशसनविवरणप्रकाशनेन नैत आङ्ग्ला न्यायमाद्रियन्त इति सुष्ठूपपादितम्।

ज्येष्ठे मास्यसिततृतीयायां खलीपत्वसदस्या मुम्बापुर्यां समगच्छन्त। श्रीगान्धिप्रतिपादितस्यासहोद्योगस्य परिग्रहश्च प्रत्यपद्यन्त। इयं तेषां प्रतिपत्तिः[3] प्रयागस्थे ज्येष्ठमासि भवे मुसलिमसंमिलन ऐकमत्येनोपोद्बलिता ॥

इत्युपाध्यायश्रीचारुदेवशास्त्रिणः कृतौ श्रीगान्धिचरिते
तृतीयः परिच्छेदः ॥

---

१. इति क्रियाविशेषणम्।
२. कृतमनोभङ्गा इत्यर्थः। मनोहतः प्रतिहतः प्रतिबद्धो हतश्च सः—इत्यमरः।
३. प्रतिपत्तिः स्वीकृतिरित्यनर्थान्तरम्।

# अथ चतुर्थः परिच्छेदः ।

वस्तुस्थितिं पर्य्यालोच्य श्रीगान्धी वाराणस्यां राज्यतन्त्राधिकृतैर-सहकारिताऽऽस्थातव्या न वेति नेतृभिः सह परामृशत। असहकारिता असहकारितैव साध्यसिद्धौ साधनमिति सर्वे साक्षाद कुर्वन्, तत्स्वरूपं च सम्यगलक्षयन् । प्रास्तुवंश्च भाद्रपदे मासि कलिकातायामसहकारितोपन्यासं परीक्षितुं विशिष्टेन काङ्ग्रेसो-पवेशनेन भवितव्यमिति ।

सप्तसप्तत्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे शुचौ[1] मासे महात्मा ऽधिके श्रावणे मासि द्वितीयस्मिन्नहन्यसहकारिता प्रारप्स्यत इत्युद-घोषयत् । प्राप्ते च तस्मिन् दिवसे राजप्रतिनिधिमुद्दिश्य प्रेषितेन पत्रेण तावत्स्वस्यासहकारित्वमसाधयत् । यमर्थं तत्रभवान् पत्रे न्यब-ध्नात्स संक्षिप्येहोपन्यस्यते—दक्षिणाफ्रीकायां मत्कृतस्य लोकहितस्य कर्मणः कृते भवतः पूर्वाधिकारिणा प्रतिपादितां[2] स्वर्णमयीं कीर्तिमुद्रां[3], जुलुजातीयविद्रोहावसरे भरतवर्षीयस्वेच्छासेवकदलमधितिष्ठतो मम व्यवसायस्य प्रतिफलमिति वितीर्णामपरां सौवर्णमुद्रां बूर्युद्धकाले च भरतदेशीयस्वेच्छासेवकशिबिकावाहदलस्योपाध्यक्षतामापन्नस्य मे व्यापारस्य कारणात् प्रत्तामन्यां महारजतमुद्रामहमतिदूनेन[4] मनसा-ऽत्रभवति प्रत्यर्पयामि । यद्यपि ममाभीष्टा इमे पुरस्कारास्तथापि पञ्चनदविशसनेन व्यथिता हिन्दवः, धर्मधर्षणया च न्यक्कृता

---

१. शुचिस्त्वयमाषाढे—इत्यमरः ।

२. वितीर्णामित्यर्थः । विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्—इत्यमरः ।

३. अस्मिन्नर्थे पदकमिति केषाञ्चित्प्रयोगः प्रामादिकः । पदकं पादक्रमे पदव्यां कण्ठाभरणे पदपाठाभिज्ञे निष्के च दृश्यते । अतोऽर्थान्तरं तु न क्वचिद्दृष्टम् ।

४. चामीकरं जातरूपं महारजतकाञ्चने इति स्वर्णनामस्वमरः ।

मुहम्मदीया इति कुतोऽहं तानार्ग येय।

लार्डजार्जप्रतिज्ञाभङ्गेनायं मे विश्वासो दाढर्यं गतो ब्रिटिश-शासननियुक्तैः खलीपत्वम् इत्येतदधिकृत्य विवेकविश्रान्त[1]मन्याय्यं च व्यवहृतमिति। भरतवर्षशासनाधिकृतैश्च यो लार्डजार्जमतपोषः स क्षते क्षारप्रक्षेपान्न विशिष्यते। अतो नाहमेवमन्यायप्रियेष्वेषु विश्वसितुं सप्रश्रयो[2] वा भवितुं क्षमे। प्रकृतिपुरुषाणामपराधविषये भवता यन्माध्यस्थ्यं प्रादर्शि, माण्टेगूमहाशयेन च सर्-माइकेल् ओड्वायर् इत्येतं भोगपतिं दोषान्मोचयित्वा यदात्मनोऽसत्यकामत्वं प्राकाशि, साम्राज्याधिकृतैश्च लोमहर्षणं पञ्चनदविशसनमुपेक्ष्य यदात्मनोऽज्ञत्वमज्ञापि तत् सर्वमालोच्य ब्रिटिशसाम्राज्यस्यायतौ मेऽतिमात्रमप्रत्ययं चेतः। अतोऽहं वर्तमानाच्छासनतन्त्रादात्मानं पृथक् करोमि। अद्य यावदनेन सहोदयुक्षि, नातः परं सहोद्योक्तुं क्षमिष्ये। भरतवर्षीयैरिदानीमेते राजमन्त्रिणः स्वपीडाहेतून्नावेदनीयाः। यतोऽन्यायप्रियेभ्य एभ्यो न्याययाचनमस्माकं वालिश्यं प्रमाणयेत्।

यावदहं लोकं स्वमतस्थं कृत्वाऽसहकारितानीतिमनुसरिष्यामि तावदहं तथाचरणान्न विरंस्यामि यथा भवान्न्यायात्पथो न विचलेद्राजधर्मं च साध्वाचरेत्। अद्याप्यहमाशासेऽचिरादेव भवाञ्जननायकैः संगत्य परामृश्य च प्रजाः परितोषयितुमुपायं चिन्तयिष्यतीति।

विशिष्टे काङ्ग्रेसोपवेशनेऽसहकारितास्वीकृतिः।

भाद्रपदमासोपक्रम एव कलिकातायां नगर्यां विशिष्टं काङ्ग्रेसोपवेशनमभूत्। तत्र संनिहिता नेतारस्त्र्यहमसहकारिताविषये हेतुवादानवादिषुः। भूयोभिर्महात्मनः पक्षः समर्थितः। स एव च सर्वैः स्वीकृतः। उपन्यासं प्रस्तुवता महात्मना यदुक्तं तस्यायं संक्षेपः—भरतराज्यतन्त्राधिकृतैः साम्राज्य-

१. विवेकः विश्रान्तो यस्मिन्कर्मणि तद्यथा तथा। विवेकविविक्तमित्यर्थः।
२. विनयप्रश्रयौ समौ—इत्यमरः।

नियुक्तैश्च द्वयैः खलीपत्वविषये यदचारि तेनातिमात्रमदूयन्त मुहम्मदीयाः। लार्डजार्जमहोदयेनापि युद्धावसरे कृतः संगरो न पालितः। एवमवस्थिते विपत्प्राप्तेभ्यो मुहम्मदीयेभ्यः सर्वेणाविरुद्धेन विधिना साह्यदानं नो भरतखण्डजानां परमं कृत्यम्।

इदञ्च भवन्तो जानते यैराधिकारिकैः पञ्चनदीयेष्वतिनृशंसमाचरितं तेऽदण्डयित्वैव दोषान्मुक्ताः, कदर्थितान् प्रत्यनुकम्पापिशुनं[1] वचोऽपि नोदीरितम्। आधिकारिकाणां पुनरयं कदाचारः[2] परिष्टुतः[3]। आत्ममानगुप्तये बलात्कृतीनामीदृशीनां विकर्मणां च व्यावृत्तये स्वराज्यावाप्तिरत्यन्तमावश्यको। तच्च स्वराज्यमसहोद्योगेनैवाप्यम्। असहोद्योगश्च निरुपप्लवो भविष्यति।

येऽद्य यावज्जनतायाः प्रातिनिध्यमाचरन्ति तैरेवेह कर्मण्यग्रेसरैर्भाव्यम्। इदं च विदितं सर्वेषां राज्यतन्त्राधिकृताः केभ्यश्चिद् भरतभूमिजेभ्यो विरुदवितरणेन, प्रतिष्ठालम्भनेन, विद्यालयानां च स्वायत्तीकारेण, व्यवस्थापिकाभिः सभाभिरधिकरणैश्च कार्यनिर्वाहणेन च स्वबलमुपचिन्वन्तीति। अत इदमुपदिशति काङ्ग्रेससमाजः—

१—भरतवर्षवास्तव्या राजदत्तबिरुदानवेतनानि चास्पदानि बिसृजेयुः। प्रान्ताधिष्ठातृसमाजस्य नगरपालिकायाश्च सभ्यपदमुत्सृजेयुः।

२—राज्याश्रितेषु गौरवापेक्षया[4] क्रियमाणानुद्धर्षान्न[5] संविभजेयुः।

---

१. अनुकम्पायाः सूचकमित्यर्थः। पिशुनो खलसूचकौ—इत्यमरः।

२. कुत्सित आचारः कदाचारः। कुपूयाचरणमित्यर्थः। कोः कत्तत्पुरुषेऽचि इति कोः कदादेशः।

३. परिनिविभ्यः सेवसितसय० इति षत्वम्।

४. गौरवमादरः। प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु—इति कुमारे।

५. उत्सवान्। अथ क्षण उद्धर्षो मह उद्धव उत्सवः—इत्यमरः।

३—राजप्रवर्तितेषु तन्निघ्नेषु[1] वा विद्यालयेषु स्वसन्तत्या विद्याया उपादानं विरमयेयुः। स्वतन्त्रा विद्याशालाश्च संस्थापयेयुः।

४ - अर्थिप्रत्यर्थिपक्षसमर्थका धर्माधिकरणानि विजह्युः। विवादपदनिर्णयाय च पञ्चायतनानि[2] कुर्युः।

५ - एतद्देशजाः सेनामध्य आरोहेण कायस्थत्वस्वीकारेण वा न राज्यतन्त्रस्योपकुर्युः।

६—नूतनसंशोधनानुसारेणोद्धाटयिष्यमाणानां व्यवस्थापिकानां सभानां सभ्यपदं न कश्चिदाकाङ्क्षेत्। यः कश्चिदाकाङ्क्षेन्न तस्मै सम्मतिं दद्युः।

७—विदेशजं सर्वं वस्तुजातं विनियोगबाह्यं क्रियताम्। स्वदेश एव वस्तूनि निर्मीयन्तां प्रचार्यन्तां चेति।

यस्मादात्मोत्सर्गादात्मसंयमाच्चर्ते केऽपि देशजनाः परमार्थसमुन्नतिम्[3] अधिगन्तुं नेशतेऽतस्तदवाप्तयेऽसहोद्योगनयः प्रवर्त्यते।

असहोद्योगप्रस्तावस्य काङ्ग्रेससदसा स्वीकृतिरेव न नः समीहितसिद्धयेऽलम्। असहोद्योगरीतिमनुवर्तमाना एव वयं स्वोद्देशमाप्स्यामः। स्वराज्याधिगमकमुपायान्तरमप्यस्ति युद्धाख्यम्। परं तत्राक्षमा वयम्। अतोऽसहोद्योग एवैक उपेयप्रतिपत्त्यर्थ उपायः। बुद्धिमत्तया न हीयते देशान्तरादित्यर्हत्ययं देशः स्वराज्यम्। परं परार्थ[4] आत्मोत्सर्गोऽस्य न विदित इति स वेदितव्यः। यदि सर्वा जनता देशश्रेयःसिद्धये सर्वस्वमुपहर्तुमना भविष्यति श्रद्धापये वोऽवश्यं स्वराज्यमधिगतं भविष्यतीति।

एवमसहकारितोपन्यास उरसिकृते[5] सति महात्मा जनप्रेरणेच्छया

---

१. तत्तन्त्रेष्वित्यर्थः। अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽयऽसौ— इत्यमरः।

२. पञ्चानां (मुख्यपुरुषाणाम् इति गम्यते) आयतनानि स्थानानि।

३. सत्यसमुन्नतिमित्यर्थः। न तु तदाभासम्।

४. परस्मा अयं परार्थः। चतुर्थी तदर्थार्थ० इति समासः। अर्थेन समासो विशेष्यलिङ्गता चेति वक्तव्यम् इति पुंस्त्वम्।

५. अङ्गीकृते सतीत्यर्थः। अनत्याधान उरसिमनसी इत्यनत्याधानेऽर्थे गतिसंज्ञाविधिः। अनत्याधानेनात्राभ्युपगमो गृह्यते।

असहकारितानीत्यनुसरणम्

जनपदं पर्याटीत्। अचिरेण लोको महात्मानमन्वकरोत्। शतश आधिकरणिकास्त्यागपत्राण्यदुः। सहस्रशश्छात्रा महाविद्यालयान् व्यजहुः। अधिकरणानि परिहृतानि, विद्याशालाश्च रिक्ताः। पण्डितश्रीमोतिलालप्रभृतयोऽनेके व्यवहारविदां वरिष्ठाः स्ववृत्तिं विहाय देशहिते कर्मणि व्याप्रियन्त। पञ्चनदे प्रदेशे श्रीलाजपतरायेण तथाऽऽरम्भि[1] यथाऽभूतपूर्वा विनिद्रता समुदपादि[2]।

एतद् दृष्ट्वोद्वेजिता राजमन्त्रिणः कार्तिके मासीदमुदघोषयन्—असहकारितानीतेः प्रवर्तकाः प्रमाथं नोपदिष्टवन्त इत्यद्य यावन्न गृहीताः। सम्प्रति तु यः कश्चिन्मर्यादामतिक्रामेत्, यस्य वा वचांसि प्रकृतिकोपं जनयेयुः, प्रकारान्तरेण वा यो बलात्कारं प्रेरयेत्स ग्रहीतव्य इत्याज्ञप्तमिति।

मर्यादाया अतिक्रमस्त्वभूत् परं राजमन्त्रिभिर्न तु लोकैः। असहोद्योगिनोऽनुदिनं प्राचीयन्त। तेनाधिकृता उद्विजितुमारभन्त व्यश्वसंश्च नागपुरे भाविनि काङ्ग्रेसोपवेशनेऽसहोद्योगनीतिः प्रत्यादेक्ष्यत[3] इति।

नागपुरे काङ्ग्रेसोपवेशनम्। असहोद्योगनयाभिनन्दनञ्च

सप्तसप्तत्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे पौषे मासि नागपुरे काङ्ग्रेससदस्याः समामिलन्। यतः श्रीचित्तरञ्जनादयः कलिकातायां महात्मनः प्रस्तावं व्यरुन्धन्नतोऽत्रापि ते विरोत्स्यन्तीति केचिदाशङ्कन्त। परमेष महिमा श्रीगान्धिनो यच्छ्रीचित्तरञ्जनदासः स्वयमुत्थायोर्जिताश्रयेण[4] वचसा-

१. रभ राभस्ये इत्यस्मात्कर्मणि लुङ्। रभेरशब्लिटोः इति नुम्।
२. पद्यतेः कर्तरि लुङ्। चिण् ते पदः इति कर्तरि चिण्। चिणो लुक्।
३. निराकरिष्यत इत्यर्थः। प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः—इत्यमरः।
४. ऊर्जित उदार आश्रयोऽर्थो यस्य तेन।

ऽसहोद्योगनीतिमपुषत् । एवं सति भाद्रपदे मासि विशिष्ट उपवेशने निश्चितोऽर्थ इह पुनरनुमोदितः ।

नेयता काङ्ग्रेससदस्याः पर्यतुष्यन् । अखिलभरतवर्षीयकाङ्ग्रेस-सदसो भरतभूमिजैः प्रशान्तैर्न्याय्यैश्चोपायैः स्वराज्यस्यावाप्तिरुद्देश इति च व्यवास्यन्[२] । श्रीगान्धिनोऽभिमतं निःसाहसत्वमवाष्टम्भनन् । अविरतोद्योगाय सर्वाणि जात्यङ्गानि संघटनीयानीति बहवोऽजीगणन् । काङ्ग्रेससदसः स्वरूपे च केचित् परिवर्ताः कृताः, येनेयं सर्वेषामेतद्देश-जानां प्रतिनिधिभूता संस्था संवृत्ता ।

काङ्ग्रेसेन नायमर्थो गोपायित इत्थम्भूतोऽसहोद्योग आद्यमेव साधनम्, कालान्तरे सम्पूर्णोऽसहोद्योगः क्रियेत कराप्रदानमप्य-सहोद्योगेऽन्तर्भवेतेति । तादृशोऽसहोद्योगः शक्यक्रियः स्यादिती-दानीं विदेशवस्तूनां विनियोगबहिष्कारः प्रबलीक्रियताम् । कर्तनं वानं च प्रवर्ध्यताम् । विद्यार्थिनस्तत्पितरश्च धर्माधिकरणिकाश्च प्रेर्यन्तां भूयसेऽसहोद्योगायेति च निश्चितम् । ये काङ्ग्रेसनिर्दिष्टां सरणीं नानुसरिष्यन्ति ते प्रजासम्बन्धिषु कर्मस्वधिकाराच्च्याव-यिष्यन्त इति च व्यवस्थापितम् ।

काङ्ग्रेसव्यवस्था राज्येऽन्ता[३] राज्यान्तरप्रतिष्ठापनस्य, ब्रिटिश-शासनप्रतिद्वन्द्विभरतवर्षीयशासनप्रवर्तनस्य वा द्योतिका इत्याङ्ग्लदेशो नेमा अनुग्रहीतुमशकत् । अवश्यं तेनात्र किञ्चित् प्रतिपत्तव्यमासीत्[४] । राज-मन्त्रिणोऽपि प्रयोद्धुं सन्धये संवदितुं वा प्राभवन् । सन्धिसंवादैरापोषः

प्रतिरोधः

---

१. इति शेषे षष्ठी ।

२. व्यवपूर्वः स्यतिर्निश्चये वर्तते । तथा च शाकुन्तले प्रयोगः—इदमुपनतमेवं रूपमक्लिष्टकान्ति प्रथमपरिगृहीतं स्यान्न वेति व्यवस्यन् इति ।

३. रो रि ढ्लोपे पूर्वस्य दीर्घोऽणः ।

४. करणीयमित्यर्थः । न जाने किं तातः प्रतिपत्स्यत इति इति शाकुन्तले । भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी इति कुमारे । प्रतिपत्तिस्तु गौरवे प्राप्तौ प्रवृत्तौ प्रागल्भ्ये—इति केशवः ।

सुप्राप आसीत्। परमव्यभिचरितां विदेशान्वयिनीं राजनीतिं व्यवहरमाणास्ते सन्धये संवदितुं मनागपि नायतन्त। बलात्कारः प्रकृतः[1]। सायुधैर्नगरपालैर्जनबाधने व्यपदेशा[2] गवेषिताः[3] प्राप्ताश्च।

श्रीगान्धिना काङ्ग्रेससमाजेन चासहोद्योगो निरुपद्रवो भविष्यतीति विहितेऽपि[4] क्वचित्क्वचित्केचित्कांश्चिदुपाद्रवन्[5]। एतेषामुपद्रवकारिणामसहोद्योगे न कश्चिद् व्यापार इत्यवितथम्। परं तत्र बाधा वृत्ताः अवर्तन्त चेत्यपि नानृतम्। प्रयागे भूम्यधिवासिनां भूस्वामिषु व्युत्थानान्यासन्[6]। रक्षापुरुषा मध्येऽपतन्। तदपरिहार्यम्। तेन नृहत्याऽभूत्। ततोऽनन्तरमुदासीनभिक्षुभ्यो देवतायतनान्याच्छेत्तुं शिष्ये[7]ष्वकालिदलानि[8] महात्मनोऽसहोद्योगनीतिमनुसर्तुमुपाक्रमन्त। एतदारम्भस्य[9] फलन्त्विदमभूद्यत् सप्तसप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे माघे मासि शिष्याणां द्विशती विशस्ता। नहि कश्चनामन्यतात्र कर्मसु श्रीगान्धिनस्तदनुगानां वा प्रष्टव्यता समस्तीति। परं राजमन्त्रिण इयं सुवेलेत्याकलयन्। फाल्गुने मासि प्रतिरोधः प्रारभ्यत। गच्छद्भिर्मासैरयमुत्तरोत्तरं पीडाकरोऽभवत्। शौण्डिका[10]

---

१. कर्तुमारब्धः। आदिकर्मणि क्तः कर्तरि च इति चकारानुकृष्टे कर्मणि क्तः।

२. व्यपदेशो व्याजः।

३. अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम्—इत्यमरः।

४. प्रदिष्टेऽपीत्यर्थः। विधानमत्रानुशासनम्।

५. अभ्ययुञ्जत। अबाधन्तेत्यर्थः। तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः—इति रघौ।

६. व्युत्थानं प्रतिरोधे च विरोधाचरणेऽपि च—इत्यमरः।

७. गुरोर्नानकस्यानुगाः शिष्या इत्याख्यया प्रथन्ते।

८. शिष्याणां केचनैतदाख्यां गताः।

९. आरभ्यत इत्यारम्भः कर्म। फलानुमेयाः प्रारम्भा इति रघौ।

१०. शौण्डिको मण्डहारकः—इत्यमरः। शुण्डा सुरा पण्यमस्य। तदस्य पण्यम् इति ठक्।

जनावेशाद्रक्षणीया इत्यधिकृताः स्वं माध्यस्थ्यं न्याय्यं प्रत्यापादयन्। यूरोपखण्डसभ्यतायाः कादम्बर्या[1]श्चेदं साहचर्यं न नूनमभूतपूर्वम्। असहोद्योगोपकारिणः स्वेच्छासैनिकव्यूहा व्यघटन्त। प्रकृतिक्षोभ-करीः सभाः प्रतिषेद्धुं विधानं व्यधीयत। केषुचित्प्रदेशेष्वसहोद्योग-वारणाय रक्षापुरुषाणां स्वेच्छानुवर्तित्वमन्वज्ञायत। सहस्रशो भरत-विषयाधिवासिनो न्यरुध्यन्त। अर्हतामग्रेसराः[2] केचित्समासतः परीक्ष्य कारासु न्यक्षिप्यन्त पशुवच्चाचर्यन्त।

महात्मनो विभवः

अष्टासप्तत्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे श्रीगान्धिनो विभवः परां कोटिमध्यास्त। महती ह्यस्य नीतौ विश्वसनीयता। अपरिच्छिन्नमैश्वर्य्यमप्यस्मिन्नाधीयत। जनास्तमृषिमिवाभ्यपूजयन्। तं कृष्णत्वमध्यारोपयन्ति चित्राणि निरमीयन्त। पौषमासारम्भे चा-खिलभरतवर्षीयकाङ्ग्रेससंसत् स्वाधिकारांस्तस्मिन्न्यक्षिपत्। उत्तरा-धिकारिनियुक्तौ च तमध्यकरोत्। एवं भरतवर्षविषयको नीतिक्रमो नितान्तं तमन्वायत्तः। सार्वत्रिकी तस्यार्हणा नाहोपुरुषिकां[3] जनयति। न केवलमनर्होऽहमस्या इति स दूयतेऽपि त्वेषा मम विनयस्य नानु-कूलेति स तप्यते। श्रीगान्धी खल्वनन्यसाधारणः पुण्यजनः। यतः स सन्दर्शनानि[4] न पश्यति, श्रुतिप्रकाशश्चास्य नास्ति। अहममानुष्या शक्त्याऽनुशिष्टोऽस्मीति नात्मानं श्रद्धापयितुं यतते न चेतरान्। अवदातं ह्यस्य निष्कापट्यम्। प्रशान्तमभ्रुकुटिमच्च नित्यमस्य

---

१. कादम्बरी सुरा।

सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा।
गन्धोत्तमाप्रसन्नेराकादम्बर्यः परिस्रुता॥ इत्यमरः।

२. प्रशस्तानाम्। अर्हः प्रशंसायाम् इति शतृप्रत्ययः।

३. आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनि—इत्यमरः। अहोपुरुषस्य भावः। मनोज्ञादित्वाद्वुञ्।

४. संदर्शनं मानसमिष्टदेवतासम्प्रयोगादि।

ललाटपट्टम् । उत्सेकविविक्तं चास्य हृदयम् । एषो ह्यात्मनो मानुष्यं प्रतिपद्यते नर्षित्वम् । लोको मामृषिरिति व्यपदिशेदित्यपि स नेच्छति । इदं ह्यत्रभवान् स्वमधिकृत्यालेखीत्—

अहं दैवतं[1] प्रार्थये यथा सर्वो भक्तिमान् हिन्दुः प्रार्थयते । प्रत्येमि सर्वे वयं भगवतः सन्देशहरा भवितुमर्हामः । वैधस्या इच्छाया विशेषप्रकाशो मे नास्ति । दृढं विश्वसिमि प्रत्यहं सर्वस्यंशोन्मेषोऽस्ति । परं वयमलनां[2] मूकां वाचं[2] प्रति कर्णौ पिदध्मः । अहं भरतवर्षस्य मनुष्यलोकस्य च क्षुद्रः परिचरोऽस्मीत्येव ममाभिमानः । सम्प्रदायप्रवर्तने न मेऽभिलाषः । न मया कश्चिदनुपलब्धपूर्वो भूतार्थ उपलब्धः । यथाहं सत्यं जानामि तथैवाचरितुं व्याकर्तुं च यते । प्रत्नाः केचित्तत्त्वार्था अप्रत्नेन विधिना मया विशकलिता इत्यवश्यमभिमन्य इति ।

अष्टासप्तत्युत्तरनवशतोत्तरसहस्रतमे संवत्सरेऽसहोद्योगस्त्वरितं प्रावर्धत । गच्छता कालेनोत्तरोत्तरं प्राचीयत ।

असहोद्योगोद्भेदः मुहम्मदीयाः प्रागलभन्त । कराचीनगर आषाढे मासि शुक्लतृतीयायां भृगुवासरेऽखिलभरतवर्षीया खलीपत्वपरिषन्मिलिता । तत्र मुसलिमाभियोगानन्द्योद्घोषितं मा कश्चिन्मुहम्मदीय आङ्गलध्वजिन्यां सैनिकपदमापदन्यान्वा प्रचूचुददिति । तत्र पारिषद्याः प्रजासत्ताकं राज्यं प्रतिष्ठापयिष्यामः, वार्षिके च काङ्ग्रेसोपवेशने सत्याग्रहं समर्थयिष्यामोऽधिकृताश्चेदङ्गेराधिनायकेषु विपक्षवृत्तिं न विपरिणमयिष्यन्तीति संतर्जन्तः प्राख्यापयन् । ततोऽल्पात्कालादूर्ध्वं नभसि[3] मासि कृष्णाष्टम्यां काङ्ग्रेसकार्यनिष्पादिका सभा मुम्बापुर्यां मिलिता । तत्र भरतभुवमागामिनो युव-

---

१. देवतैव दैवतम् प्रज्ञाद्यण् । दैवतानि पुंसि वा इत्यमराद् विकल्पितमस्य क्लीबत्वम् ।

२-२ संज्ञानम् । अन्तःकरणप्रवृत्तिरित्यर्थः । अस्ति हृदिस्थोऽनुच्चरितः कश्चिच्छब्दो यः सत्कर्मणि प्रवर्तिष्यमाणं पुरुषमभ्यनुजानातीव विपर्यये च प्रतिषेधतीवेत्यद्यत्वे लोके व्यवहारः तदनुपातीह प्रयोगः ।

३. श्रावणे । नभः खं श्रावणो नभाः—इत्यमरः ।

राजस्यागमो नोत्सवैरभिनन्दनीयः, राजनियुक्तैश्च क्रियमाणा उद्धवा[1] न संविभजनीयाः, सर्वस्य च वैदेशिकस्य वस्तुनो विनियोग-बहिष्कार इषे कृष्णचतुर्दश्याः प्राक् फलेग्रहिः[2] करणीय इति च निश्चितम् ।

खलीपत्वनायकावलिभ्रातरौ खलीपत्वसंमिलने सत्याग्रहपक्षम-पुष्यतामित्यगृह्येताम् । एतद् दृष्ट्वाऽऽश्वयुजे शुक्लतृतीयस्यां श्रीगान्धी मुहम्मदीयानां मम चैकार्थ्यमित्युदघोषयत् । प्रख्यातैः पञ्चाशताऽखिलभरतवर्षीयकाङ्ग्रेसपारिषद्यैः स्वहस्तपरिचिह्नितेन घोषणापत्रेण च स भवान् सर्वोऽसहोद्योगविषये स्वमतं प्रकाशयितु-मर्हतीत्यप्रथयत् । अर्थनीतिदेश[3]विनिपातकरानिमान् शासनेऽधिकृतान्न कश्चिद् भरतवर्षीयो जनो भजेतेति चाभ्यधात् ।

श्रीगान्धिन इदं घोषणापत्रं कार्तिके शुक्लपञ्चम्यां देहल्यां मिलितया कार्यनिष्पादिकया काङ्ग्रेससभयाऽन्वमोदि । कृतं दैवा-धीनं कर्म, अधुना यद्भावि तद्भवत्वित्यभिधाय सा सभा सर्वः प्रदेशः स्वक्षमतामालोच्य करप्रत्याख्यानादि शासनव्यतिक्रमं प्रक्रमितु-मर्हतीत्यन्वजानात् । सत्याग्रहिभिस्तावत् स्वदेशवस्तुविषयः कार्यक्रमः कृत्स्नोऽनुवर्तनीयः, अहिंसाव्रतञ्च चरणीयम् । परार्थोऽयं सर्व आरम्भ इत्यभिव्यङ्क्तुं सत्याग्रहिण इदमावेदिता न यूयं न च युष्माकं पुत्रकलत्रादयः सदसः किमप्यर्थात्मकं साहायकं लप्स्यन्त इति ।

प्रत्यासीदन्त्यां सत्याग्रहफलवत्तायां मार्गे कृष्णद्वितीयस्यां युव-राजो मुम्बायां पोतादवातरत् । मध्यमा अधमाश्च प्रजाश्रेणयस्तदभि-नन्दनं न संव्यभजन् । परमाढ्याः पारसीका राजनियुक्ताश्च काङ्ग्रेसानुशासनं नितान्तमुपैक्षन्त । तेषामत्रैवमात्मिका संस्थिति-

---

१. अथ क्षण उद्धर्षो मह उद्धव उत्सवः—इत्यमरः ।

२. स्यादवन्ध्यः फलेग्रहिः—इत्यमरः । फलेग्रहिरात्मम्भरिश्च इति साधुः ।

३. अर्थश्च नीतिश्च देशश्चेति अर्थनीतिदेशाः तेषाम् ।

र्जनकदम्बे[1]ष्वेतादृशमावेशमजनयद् यथा तानीश्वराणां सौधान्यरुन्धन्, तत्रस्थानुपाद्रवन्, सर्वस्वं चापाहरन्। स्त्रीरपि न पर्यहरन्। बहवः क्षताः प्राणैश्च वियुक्ताः। परमत्रैवायं प्रमाथोऽभून्नेतरत्र। एतन्नगरं विहाय सर्वत्र भारते वर्षे प्रदिष्टा[2] कार्यनिवृत्तिर्धर्मचर्येव निरुपद्रवा व्यवस्थिता चाभूत्। कश्चिदपि विमर्दो नाभूत्। मुम्बापुर्याः प्रजाक्षोभस्योदन्तः श्रीगान्धिनं शर इव हृदयेऽविध्यत्। यावत्स तमुदन्तमश्रौषीत् तावत्स तं प्रदेशं वेगितया गत्याधावीत्। यदा चोपप्लवकारिणस्तं जयशब्देनासभाजयंस्तदा काप्यस्य मानसी व्यथाऽभूत्। सरोषं स जनाकीर्णं प्रशममनयदपसरणश्चादिशत्। पारसीका युवराजस्यागममुत्सवेनाभिनन्दितुमार्हन्न् चेच्छंश्चेत्, प्रमाथो न कथमपि न्याय्यः प्रतिपादयितुं शक्य इति च प्रतिज्ञापूर्वकमकथयत्। सर्वः समुदितो जनोऽवहितेन मनसा महात्मनो वचांस्याकर्णयत्। परमाराद् विमर्दः पुनरुदभवत्। विंशतिसहस्रं मनुष्या रोषाविष्टा विवृद्धमत्सराः[3] सहसा विवेकं ग्राहयितुं न शक्याः। तथापि यूरोपखण्डे कनिष्ठेनापि राज्यपरिवृत्त्यर्थकेनो[4]पप्लवेन यः प्रणाशो भवति तस्यार्धांशोऽप्यत्र नाभूत्। मनस्तापव्यञ्जकैर्वचोभिः श्रीगान्धी मुम्बापौरलोकं सत्याग्रहिणश्च कर्तव्यमबोधयत्। इमे वृत्तान्ताः प्रमाणयन्त्यद्याप्ययं लोकोऽक्षमः सत्याग्रहस्येति। अतः स सत्याग्रहो व्याक्षिप्यता[5]मित्यादिशत्। स्वानुगानां बलात्कृतीर्निष्क्रेतुं स सप्ताह एकाहमुपवस्तुमारभत। भरतवर्षाधिवासिनो यूरोपमहाद्वीपीया मुम्बाप्रकृतिक्षोभेन तथोदवेज्यन्त यथा सर्वगामिन्या कार्यनिवृत्त्या। ते राजप्रतिनिधिं

---

१. जननिवहेष्वित्यर्थः। कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्।
२. प्रदिष्टा विहिता। शिष्टेति यावत्।
३. मत्सरो वैरम्। मत्सरा मक्षिकायां स्यान्मात्सर्यक्रोधयोः पुमान्—इति मेदिनी।
४. राज्यादिपरिवृत्त्यर्थे केचिदाधुनिकाः संक्रान्तिरिति शब्दं प्रयुञ्जते। तदयुक्तम्। अनभिधानात्।
५. विलम्ब्यतामित्यर्थः। व्याङ्पूर्वः क्षिपतिर्विलम्बनवृत्तिः तथा च रघौ

राजमन्त्रिणश्च प्रतिविधानाय[१] प्राणुदन्। तेन बहुषु प्रदेशेषु बाधका विधयः प्रावर्त्यन्त। चतुःषष्ट्युत्तरनवशतोत्तरसहस्रतमे विक्रमवत्सरे राजद्रोहिणां व्युत्थानानि प्रच्छन्नाः सभाश्च निरोद्धुं यो विहितो विधिः सोऽधुना काङ्ग्रेसस्वेच्छासेवकदलगामी कृतः। सहस्रशः सेवका गृहीताः। सहस्रशश्च जनाः स्वं स्वं नाम सेवकनामावल्याम-लेखयन्। ते च प्रादेशिकीभिः संसद्भिर्भविनीताः। अत्रान्तरे पौषे कृष्ण-दशम्यां युवराजागमनकाले कलिकातानगर्यां कार्यनिवृत्तिर्भविष्यतीति निश्चितम्। तस्मिन् वासरे युवराजो नीरवं खिलीभूतं च तन्नगरं सङ्घेनागमत्।

अखिलभरतवर्षीया काङ्ग्रेससंसद् अमदाबाद इत्यत्र मिलिता। अनन्तरपूर्वं च संसत्पतिर्गृहीत इति समासतो विचारणाऽभूत्। असहो-द्योगेऽहार्यो नो निश्चय इति स्पष्टमावेद्यत। नगरजनाः स्वेच्छासेवा-वृत्तये धरणसहनाय[२] च प्राचोद्यन्त। यत्र तत्र बृहत्यो जनसभाः क्रियन्तामिति लोकः प्रैर्यत। सत्याग्रहः प्रकुप्यन्तीभिः प्रजाभिः शस्त्रबलेन शासनस्यातिक्रमेण साधकतया समोऽपि दयार्द्रतया ततोऽ-तिरिच्यत इति निश्चित्य सत्याग्रहे तावदेव प्रवर्ततामयं लोको यावद-हिंसातत्त्वं गृह्णीत इत्यन्वमन्यत। भूयांसः पारिषद्या उपवेशनान्ते ग्रहीष्यन्त इति प्रत्यक्षत उपलभ्य ते स्वाधिकाराञ्छ्रीगान्धिनि न्यक्षि-पन्। तेन तमनियन्त्रणमादेशकमकुर्वन्, उत्तराधिकारिनियुक्तौ चा-ध्यकुर्वन्। काङ्ग्रेससमितिसंमत्या विना श्रीगान्धी राजमन्त्रिभिः सन्धातुं काङ्ग्रेसोद्देशं वा परिवर्तयितुं न प्राभवदित्यत्रैव तस्य शक्ति-सङ्कोचः। सभासदामेकदेशो भरतवर्षस्वातन्त्र्याय यथापेक्षं प्रमाथोऽप्य-भ्युपेय इति प्रस्तोतुमङ्गीकारयितुं च प्रायस्यत्। परमयं प्रस्तावो बहु-मतमनुरुध्यापास्तः।

---

प्रयोगः—अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् इति।

१. प्रतिक्रियार्थम्। क्षिप्रमेव कस्मान्न प्रतिविहितमार्येण इति मुद्राराक्षसे।

२. धरणं बन्धनम्। आसेध इति यावत्।

आगामिषु सप्ताहेषु सर्वगो भरतवर्षीयाणां श्रद्धातिरेकोऽभिव्यक्तिमगात् । पञ्चविंशतिसहस्रं पुरुषाः स्त्रियश्चात्मानं कारारक्षिषु सोल्लासं[1] समार्पयन् । सहस्रशश्च जना भरतवर्षोद्देशे स्वश्रद्धामुपपादयितुमात्मोत्सर्गाय सज्जास्तेषामन्वगतिष्ठन्[2] ।

पुनरपि श्रीगान्धी देशजनाः सत्याग्रहस्य क्षमा इत्यमन्यत । मुम्बाप्रदेशान्तर्वर्तिनि मण्डले बारदौलीत्याख्ये सत्याग्रहारम्भस्य सङ्केतश्चिकीर्षित आसीत् । अत्रत्या जनता श्रीगान्धिनो भाषितं सततमगृह्लादकरोच्च । अष्टासप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे माघे शुक्लद्वादश्यां राजप्रतिनिधिमुद्दिश्य लिखिते निरावेष्टने पत्रे श्रीगान्धी स्वकार्यपरिपाटीमस्फोटयत् । तत्र प्रश्रितैः स्पष्टैश्च पदैर्युद्धमुदघोषयत् । असहोद्योगनीतेरहं नायकोऽस्मि, मम च सर्वानुयोज्यतेति च प्रत्यजानीत । सर्वप्रथमं बारदौलीत्यत्र ग्रन्थादेः प्रकाशनस्य, समवायस्य, वाचश्च स्वातन्त्र्यस्यापहर्त्रीं शासनपद्धतिं प्रति निःप्रमाथं जनव्युत्थानं भवितेति च तत्र प्रत्यपादयत् । श्रीगान्धी लार्डरेडिङ्गमहोदयं सप्ताहेन नीतिमार्गपरिवृत्तिप्रख्यापनमयाचत । असति प्रख्यापन ऊर्ध्वमेतस्मात्कालात् सत्याग्रहः प्रारप्स्यत इति च तमावेदयत् ।

इदं च पत्रं राजप्रतिनिधिं प्रति प्राहीयत, उदभवच्च चण्डतर उपप्लवः । गोरक्षपुरप्रान्ते चौरीचौरा इत्यस्मिन्पत्तने जनयात्रायामतीतायां केचिदवहीना व्यस्तं पर्यटन्तो रक्षिभिरुपारुध्यन्तापीड्यन्त[3] च । जनैरवस्कन्नास्ते रक्षापुरुषा गुलिकाः प्राक्षिपन् । यदा त आग्नेयचूर्णं निःशेषतामनयंस्तदाऽऽत्मरक्षायै नगरपालागारं प्रत्यगच्छन् । जना नगरपालावासेऽग्निमददुः । अवरुद्धा मुधैव दयामयाचन्त । तेऽद्वयं न्यषूद्यन्त[4] दह्यन्त च । यतस्ते लोकान् प्राकोपयन् यतश्चासहो-

1. सहर्षमित्यर्थः ।
2. अन्वक् पश्चात् । अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्—इत्यमरः ।
3. अवबाध्यन्तेत्यर्थः । अपपूर्वाद्रुधेः कर्मणि लङ् ।
4. प्रामथ्यन्तेत्यर्थः षूद क्षरणे चुरादिः । आदेशप्रत्यययोः इति षत्वम् ।

द्योगानुषक्तस्य कस्यापि स्वेच्छासेवकस्य तत्रावस्कन्दने व्यापारो नाभूदत एतत्प्रमाथविषये स्वस्य प्रष्टव्यताया अपह्नवोऽपि श्रीगान्धिन्युपपद्येत। परमत्रभवान् सर्वस्य देशस्यैकं संज्ञानमिति स्वजनेषु मध्यादेकस्य कस्यचिदाग[1]स्तस्य मर्माण्यकृन्तत्। मयैवैतेषां प्रजादुष्कृतानामुत्तरं दातव्यमिति सोऽभ्युपागात्। स तथा समत्रस्यद्यथाऽनालोच्य समनन्तरपूर्वं प्रवर्तितं सत्याग्रहमिदानीं पुनर्न्यषेधीत्। मुम्बापुरीजनप्रकोपादूर्ध्वं याऽवस्थितिरभूत्ततः साम्प्रतिकी नितातं विषमतरा। किं चाधुनाऽल्पान्येव दिनानि राजप्रतिनिधिं प्रतिघोषणापत्रं प्रेषितवतस्तस्य। स्वकार्यक्रममनुपपन्नतां हासास्पदतां चानीत्वा कथं स एतत्प्रत्यादेष्टुमशकत्। पिशाचा'ग्रणीरेतदवारयदिति श्रीगान्धी स्माह। या पिशाचाग्रण्यो वाक् सा दृप्तस्येत्युपलभ्य स घोषणापत्रं प्रत्याख्यातुं निरचिनोत्।

फाल्गुने मासि कृष्णपञ्चम्यां तरुणभरतवर्षम् इतिनाम्नि वार्तापत्रेऽलोकसामान्यं लेख्यं प्रकाशितमभूत्। इदं च श्रीगान्धिनः स्वदोषप्रख्यापणम्। दर्पस्य विनेतारमुपकर्तारं विधातारं स इत्थमस्तुवीत—पर्याप्तो मयि भगवतः प्रसादो वृत्तः। त्रिरहं तेन प्रबोधित इदानीं यावदस्मिन् भारते वर्षे तादृश्यौ सत्यपरायणताऽहिंसाव्रतता च न स्तः, यादृश्योः सत्योरेव संभूय शासनातिक्रमो न्याय्य उपपादयितुं शक्यः स्यादिति।

पञ्चसप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे रोलट्विधानविरोधसंक्षोभावसरे स भगवान्मां प्राबोधयत्। अमदाबादादिपत्तनस्थाः प्रामाद्यन्। अहं न्यवर्तिषि स्थविष्ठं चेमं भ्रममभ्यधिषि। परमेश्वरस्य लोकस्य चाग्रेऽहमात्मानमवानमयम्। न केवलं जनतया संभूय शासनस्यातिक्रममुपारमम्[3], अपि त्वात्मनाऽपि। ···पुनः कालान्तरे-

१. पापम्। पापापराधयोरागः—इत्य.रः।
२. य. पुरुषनधि[illegible]याकार्यं कारयति। एवं विश्वसिति व्यवहरति च लोकः।
३. व्यरमयमित्यर्थः। उपाच्च इति परस्मैपदम्। इह सूत्रे रमिरन्तर्भावितण्यर्थो गृह्यते।

ऽसौ मुम्बापुरीव्यतिकरैर्दारुणं मां प्राबोधयत्। स मां तत्साक्षिणम-करोत्। ...बारदौल्यामविलम्बितं प्रवर्तयिष्यमाणं संभूय शासनाति-क्रमं विलम्बयितुमभिप्रैमीति प्राख्यापयम्।

पञ्चसप्तत्युत्तरनवशतोत्तरसहस्रतमवत्सरभवाया अवमानना या अधुनातनी गरीयसी। परमेषा मामुपाकृत। लोकोऽपि व्याक्षेपेणो-पाकारीति प्रत्येमि। अहिंसा सत्यं च भरतवर्षस्याभिमते इति व्याक्षे-पेणोपपादितम्।

परमरुन्तुदो न्यक्कारः[1] साम्प्रतं ममोपानंसीत्[2]। परमेश्वरः चौरीचौरावृत्तान्तैर्मामन्वशात्। यतश्च भारतं वर्षमात्मनोऽहिंसाव्रत-त्वमभिमन्यते, प्रमाथशून्यैश्चोपायैः स्वातन्त्र्यपदमधिरुरुक्षति, अतो महाप्रकोपप्रयुक्तोऽपि जनप्रमाथोऽशुभं निमित्तम्। निःसाहसा स्व-राज्यावाप्तिर्निःसाहसं प्रमाथिजनानां वशीकारं नितान्तमपेक्षते। अहिंसाव्रता असहकारिणस्तदेवामोघक्रिया भवितुमर्हन्ति यदा तैर्दुर्वि-नीतानामुद्दामवृत्तीनां रथ्यापुरुषाणां[3] यथावत् वशीकारः साधित इति।"

अतो माघे शुक्लचतुर्दश्यां स स्वसंशीतोर्बाधाश्च कार्यनिष्पादि-कायै काङ्ग्रेससमित्यै विवृणोति। सर्वे सदस्यास्तेनैकमत्यं नागच्छन्। न जातु कश्चित् कदाचिदेतादृशैर्दत्तावधानैर्मर्षणैः सहकारिभिः सजू-र्भिश्च[4] कृती कृत इति महात्मा तानधिकृत्य न्यगादीत्। ते तस्य विकल्पान् परमादरेणालोचयन्। विज्ञप्ताश्च सत्याग्रहप्रवृत्तिं विलम्ब-यितुमन्वमन्यन्त। लोकोऽहिंसातत्त्वं ग्राहयितव्य इति च सर्वाः सभाः

---

१. मानावभङ्गः। न्यक्कारो हृदि वज्रकील इव मे तीव्रं परिस्पन्दते इति महावीरचरिते। न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः इति हनुमन्नाटके।

२. मामुपागमत्। ममेति शेषे षष्ठी। उपानंसीदिति नमेः कर्तरि लुङ्।

३. रथ्यापुरुषः सामान्यो जनः।

४. वयस्यैः। सहचरैरिति यावत्। र्वोरुपधाया दीर्घ इकः।

प्रायुञ्जत ।

तरुणभरतवर्षनाम्नि स्वके पत्रे प्रकृतां कार्यक्रमपरिवृत्तिमधिकृत्ये-त्थमलेखीन्महात्मा—वेद्मि प्रथमाक्रमलक्षणस्य सर्वस्य कार्यक्रमस्या-त्यन्तविपर्यासो नीतिविद्दृष्ट्याऽनुपपन्नोऽज्ञानप्रयुक्तश्च स्यादिति। परं न संशये[1] धार्मिकदृष्ट्याऽदुष्ट इति। मदीयेन मानावभङ्गेन दोषप्रख्यापणेन चैष देशोऽवश्यमुपकृतो भविता। अहिंसा सत्यं चेत्येको मे गुण इति ब्रुवे। अमानुष्यः शक्तयो मे सन्तीति नाहमभिमन्ये। नाहं ता अपेक्षे। मम च तादृश्येव भौतिक्यपायिनी[2] तनूर्यादृशीतरेषां सजातीनाम्। अतोऽहं तथैव स्खलनशीलो यथा कश्चिदितरः। बहुधा परिच्छिन्ना ममोपकृतयः, परं परमेशो वैकल्ये सत्यपि मां सततमन्वग्रहीष्ट ।

दोषप्रख्यापणं नाम संमार्जन्या साधूपमेयम्। सा ह्यवकरमप-मार्ष्टि भूतलञ्च शुद्धमुज्ज्वलं च करोति। प्रख्यापणेनाहमात्मानं बलीयांसं मन्ये। निवृत्त्या च नोऽर्थोऽवश्यं समर्धिष्यति। न जातु कश्चिद्विमार्गगमनं प्रत्यभिनिविष्टो गन्तव्यं स्थानं गतः। चौरीचौरा-दुष्कृतानि बारदौलीजनेषु नैव विक्रियां जनयेयुरिति केषाञ्चिदुक्तिः। नाहं मनागपि तां संदिहे। परं बारदौलीति भरतवर्षालेख्ये चिह्न-मात्रम्। बारदौलीस्थानां प्रयत्नास्तावदेव साफल्यं भजेयुर्यावत्प्रदेशा-न्तरस्थाः सर्वात्मना तैः सहकुर्युः। यथा च मनःशिलायाः कणेन सम्पृक्तं पयोऽपेयमिति नाङ्गीकार्यं भवति तथैव चौरीचौरा इत्यत आगतेन हालाहलविषसम्पर्केण बारदौलीसौजन्यमप्यग्राह्यं भविष्यति। द्वितीयः प्रदेशो भरतवर्षस्य तथैव प्रतिच्छन्दको यथा प्रथमः। अन्ततः चौरीचौरा इति प्रकुपितया रुजो लक्षणम्। सत्याग्रहप्रवृत्तौ च प्रकोपेण[3] न भाव्यम्। सत्याग्रह इति तूष्णीं दुःखसंवेदनायै[4] सज्जी-

---

१. सम्पूर्वाच्छेतेः कर्तरि लट्।
२. अपायो नशोऽस्या अस्तीति। नश्वरेत्यर्थः।
३. प्रातिपदिकान्तनुम्विभक्तिषु च इति विकल्पेन णत्वम्। तेन पक्षे प्रकोपेन इत्यपि भवति।
४. दुःखानुभूतये। विद चेतनाख्याननिवासेषु चुरादिः। ण्यासश्रन्थो युच्।

करणम्। अद्भुतोऽस्य प्रभावः। यद्यप्यलक्षितोऽनुत्कटश्च। चौरीचौरा इत्येतद्गता दुरन्ता घटना प्रदेशनीव तं मार्गं बोधयति यमेतद्देशजा अनुवर्तेरन्, अभ्यर्थाश्चेत् पूर्वोपाया नास्थीयेरन्। यदीच्छामोऽप्रमाथो मा कदाचित्प्रमाथकारणतां गमदिति, असंशयमिदं नः कृत्यं यदस्माभिर्निवर्तनीयं, प्रशमाय च प्रयतनीयं सत्याग्रहप्रवर्तनं च न तावच्चिन्तनीयं यावन्न वयं प्रतीमः सत्यपि च शासितॄणामुत्तेजने स्वास्थ्यं वर्त्स्यतीति। प्रतिपक्षा अस्मन्न्यग्भावे पराजये वाऽऽत्मना विकत्थन्तां[1] नाम। कातरा वयमित्यभियोगो वरं न च शपथप्रत्यादेशः, न चेश्वरेऽपराधः।

अवश्यं मयाऽऽत्मा शोधनीयः। मया युक्ततरेण मामभितो जायमानामणिष्ठामपि सदाचारपरिवृत्तिमुपलब्धुं क्षमेण साधनेन भाव्यम्। मम प्रार्थनाभिरधिकतरार्जवोपेताभिर्विनीताभिश्च भवितव्यम्। न हि म उपोषणा[2]च्छ्रेयोऽघमर्षणम्[3]।

आत्मना देहेन्द्रियवशीकारावाप्तये क्रियमाणमनशनं क्रमिके नृणां समुत्कर्षे साधकतमं करणम्।...... निर्विवादं भयावहस्यातङ्कस्य प्रतिक्रियायां प्रकटितापाटवस्य शस्त्रवैद्यस्य पदमधिरोहामि। मयैतत्पदं वाऽपास्यमधिकतरं पाटवं वाऽवाप्यम्। ......प्रमाथिनीं भवन्तीं प्रमाथपुरोनिमित्ततां वा गच्छन्तीमिमां जनचेष्टां वारयमाणोऽहं मानावभङ्गं वा, बाधां वाऽत्यन्तं विवासनं वा निधनमपि वा स्वेच्छातः सहिष्ये।

जगति विरला एवार्षेय्यो भणितयोऽस्य सन्दर्भस्य तुलामारोहन्ति।

---

ततष्टाप्। दुःखसंवेदनायैव रामे चैतन्यमर्पितम् इत्युत्तरे रामचरिते।

१. कत्थ श्लाघायाम् अनुदात्तेद् भौवादिकः। तत्राविद्यमानगुणसम्बन्धज्ञापनं श्लाघा। तत्रार्थेऽयमकर्मकः। कृत्वा कत्थिष्यते न कः इति भट्टिकाव्ये। सकर्मकत्वे त्वपवादोऽर्थः। न पौरुषेणापि विकत्थतेऽन्यान् इति विदुरनीतौ। भवानस्मान्विकत्थते इति चान्यत्र भारते।

२. उपोषणमुपवासः। उष दाहे इत्यस्य ल्युटि रूपम्।

३. पापापनोदकम्। मृष सहने। ल्युट्। सहनमभिभवः।

अनुपमेयं ह्येतादृश्या व्यवस्थितेर्नये गौरवम् । राजनीतिनिष्णातास्त्वेतामप्रास्ताविकीं[1] व्याघातकरीं चामन्यन्त ।

अतो देहल्यामष्टासप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे फाल्गुने कृष्णत्रयोदश्यां मिलितायां काङ्ग्रेससंसदि श्रीगान्धिना पारिषद्यानां महान् विसंवादः प्रादुरासीत् । कार्यनिष्पादिकायाः सभायाः प्रस्तावा वादानुवादे चिराय प्रवृत्ते सत्येव प्रमाणीकृताः । लोकाः संभूय शासनातिक्रमस्याक्षमाः, तेषां संहननं कालमपेक्षत इति श्रीगान्धी प्रत्यजानीत । निर्माणात्मकं कार्यक्रमञ्च सविनयं न्यवेदयत् । अनेके पारिषद्याः स्वातन्त्र्यार्थस्योद्योगस्य मान्द्येन रोषं गताः सत्याग्रहव्याक्षेपं दृढोक्तिपूर्वं न्यषेधन् । श्रीगान्धिनः कार्यपद्धतिर्देशोत्साहस्यावसादयित्रीति तेऽभ्यमन्यन्त । कार्यनिष्पादिका सभा धिक्क्रियतामिति प्रास्तूयत । प्रतिज्ञाश्चास्या अपास्यन्तामिति चोपाक्षिप्यत । परमन्ते श्रीगान्धिना जितम् ।

कारागमन-संविधानम्

श्रीगान्धी स्वं निरोधं चिरमवेक्षमाण आसीत् । सप्तसप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे कार्तिक्याः पौर्णमास्याः प्रभृति सर्वाणि तस्य कार्याणि संविहितान्यासन् । स्वश्च सज्जः । स यद्यहं निरुध्येय इत्येतच्छीर्षकेण लेखेन लोकानुपादिशत् । पुनरपि निरोधप्रवादे प्रथिते सति सोऽष्टासप्तत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे फाल्गुने शुक्लैकादश्यामित्थमन्वशाज्जनान्—नाहं शासनाधिकृतेभ्य आशङ्के । तेनृहत्यया प्रवर्तिता रुधिरकुल्याऽपि मां भीषयितुं नालम् । कामये लोकाः पर्याप्तमात्मसंयमं रक्षेयुर्मन्निरोधदिवसं चोत्सवदिवसमाकलयेयुः । शासितारः प्रतियन्त्यहं ह्यस्याखिलस्योद्योगस्यात्मा, अपसारितश्चेत् स्यां स्वस्था वयं भवितास्म इति । इदमेव तर्हि कर्तव्यतया शिष्यते यज्जनशक्त्यनुमानम् । निरुपद्रवाः प्रशान्ताश्च भवन्तु जनाः ।

१. प्रस्तावोऽवसरः प्राप्तोऽस्या इति प्रास्ताविकी । सा न भवतीति ।

सार्वभौमस्य प्रमाथस्योद्भवाद् बिभ्यतोऽधिकारिणो मन्निरोधं परिहरन्तीति यत्तन्न मे मानस्य प्रमोदस्य वा कारणमपि तु न्यग्भावस्य। लोकः कार्यान्मा निवृतत्[1], मा चामर्षं प्रचकाशत्। शासितृभिर्मा भूत्सहकारिता। अधिकरणानि विद्याशालाश्च विनियोगबाह्यानि क्रियन्ताम्। इदमत्र समासत उच्यते—असहोद्योगकार्यकलाप ऐकान्तिकेनानुक्रमेण विनियमेन चानुष्ठीयतामिति। लोका एतं कार्यकलापं निर्वाहयिष्यन्ति चेज्जेष्यन्ति। विपर्ययेऽनर्थाधीना[2]स्ते भविष्यन्तीति।

सर्वस्मिन् वस्तुनि सुविहिते सति महात्मा स्वाभीष्टमाश्रमं शबरवतीस्थमगमत्। तत्र च प्रियैः शिष्यैः परिगतः प्रसंख्यानपरो[3] रक्षःपुरुषागममुदैक्षत[4]। नूनं स निरोधस्योदकण्ठत।

फाल्गुने शुक्लद्वादश्यां रक्षिण आगमन्। तेषामागमप्रवृत्तिः पूर्वमेवाश्रमं प्रापत्। गमनायोद्युक्तो महात्माऽऽत्मानं रक्षिसादकरोत्[5]। श्रीगान्धिनः सहधर्मिणी काराद्वारं यावत्पत्या सह गन्तुमन्वज्ञायत।

चैत्रे कृष्णपञ्चम्यां शनौ मध्याह्ने ब्रूम्सफील्ड् इत्याख्येन न्यायाध्यक्षेण[6] श्रीगान्धिनः कार्यपरीक्षणं प्रारभ्यत। अत्र

विचारः

विलक्षणस्य सौजन्यस्य मनःसमुन्नतेश्च[7] व्यक्तिरभवत्। तद्दिने स आधिकरणिको राजमन्त्रिणां बहून् दोषान्

१. निवृत्तो मा भवत्वित्यर्थः। माङि लुङ् इति सर्वलकारापवादो लुङ् इह लोडर्थे। द्युद्भ्यो लुङि इति वा परस्मैपदम्।

२. कष्टमापन्नाः, दुर्गताः। छिद्रोपनिपातिनोऽनर्थाः इति शाकुन्तले।

३. प्रसंख्यानं ध्यानम्। श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव इति कुमारे।

४. प्रत्यैक्षत, प्रत्यपालयत्। उदीक्षतिः प्रतीक्षणेऽपि वर्तते। त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती इति मनुप्रोक्तायां भृगुसंहितायाम्।

५. रक्षिणामायत्तमकरोदित्यर्थः। तदधीनवचने इति सातिः प्रत्ययः।

६. प्राड्विवाकेनेत्यर्थः। अत्रार्थे न्यायाधीश इति केषाञ्चिदाधुनिकानां प्रयोगः प्रामादिकः।

७. मनस्विताया इत्यर्थः।

प्रामाद्[1]। जे० टी० स्ट्रैङ्गमैन् इतिनामा वक्तृपुरोगमो राज्ञि प्रजाविरक्तिजननेन श्रीगान्धिनमभ्यशंसत्। वर्षद्वयं चायमविरतं प्रकृतिप्रकोपायायतिष्टेति च प्रत्यपीपदत्[2]। महात्मैव चौरीचौरा इत्यत्र वृत्तायां नृहत्यायामनुयोज्य इति चाभ्यधात्। कामं सोऽहिंसामुपादिशद् विरक्तिमपि चोपादिशत्। अतो लोकेन कृतायां हिंसायां स प्रष्टव्य इति च प्रत्यजानीत।

महात्मन उपन्यासः

सत्यं ह्याह वक्तृपुरोगमो यदिदमाह—धुर्यतां गतेन सम्यग् विनीतेन[3] लब्धोचितलोकप्रतीतिकेन[4] श्रीगान्धिना वेदितव्यमासीत् कस्क[5] उदर्कः सर्वस्य मे कर्मणो भवितेति। अहमवेदिषं यदहं पावकेन समक्रीडे[6]। अहमात्मानं संशयेऽपातयम्। विसर्जितश्चेत् स्यामद्यापि तथैवाचरिष्यामि। अद्य प्रातरियं मे बुद्धिरभूत् स्वाधिकारात् प्रमाद्येयं न ब्रूयाञ्चेद्यदिह स प्रति ब्रवीमि।

अहं प्रमाथं पर्यजिहीर्षं[7] प्रमाथं च परिजिहीर्षामि। अप्रमाथो मम श्रद्धायाः प्रथममङ्गम्। मत्स्वीकृतस्य मतस्य च चरमावयवः। परं मया वरणं कर्तव्यमासीत्। तां शासनपद्धतीं[8] वा मृष्येयं ययायं मे देशोऽप्रतिविधेयं[9] क्षत इति मन्ये। मन्मुखात्सत्यं शृण्वतां जनानां

---

१. अभ्ययुङ्क्तेत्यर्थः। महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् इति याज्ञवल्क्यस्मृतौ।
२. अबोधयत्। प्रतिपूर्वाण्ण्यन्तात्पादयतेः कर्तरि लुङ्।
३. कृतविद्येन। विनयं प्रणतौ प्राहुः शिक्षायां विनयो मतः—इति विश्वः।
४. लोकव्यवहारविदेत्यर्थः। प्रतीतिरनुभवः।
५. कस्कादिषु च इति विसर्जनीयस्य सः।
६. समखेलमित्यर्थः। क्रीडोऽनुसंपरिभ्यश्च इत्यात्मनेपदम्।
७. परिपूर्वाद् हरतेः सनि लङि रूपम्। पर्यत्यजमित्यर्थः।
८. बह्वादिभ्यश्च इति वा ङीष्।
९. यथा प्रतिविधातुं न शक्यं तथेत्यर्थः। क्रियाविशेषणमेतत्।

प्राचण्ड्योद्भेदस्य संशये वाऽऽत्मानं पातयेयम्। जानामि मामका लोकाः कदाचिदुन्मत्ता इवाचारिषुः। एतस्य कृतेऽत्यन्तं विषीदामि। अतो नाहमत्र लघुं दण्डं सहितुं[1] संनिहितोऽपि तु गरिष्ठम्। नाहं दयां याचे। नाहं दोषशमनीं कामपि वार्तां ब्रुवे। गरिष्ठं तं दण्डमाव्हयामि सहर्षं सोढुञ्च सज्जोऽस्मि यो मयि तस्य कर्मणः कारणात् प्रणेयो यद्दण्डनीत्यां कामतः कृतोऽपराधः, यच्चाहं शिष्टस्य पौरस्य परं कृत्यं प्रपश्यामि। एकैव ते गतिर्धर्माधिकारिन्! स्वपदं वा परित्यजेर्गरिष्ठं वा दण्डं मयि निपातयेरिति।

अतोऽचिन्तितपूर्वादुपन्यासादनन्तरं श्रीगान्धी पत्रमारोपितमिदं प्रख्यापणमवाचयत्—

अयं मे धर्मो यदहं भरतवर्षीयेभ्य आङ्ग्लेभ्यश्च व्याख्यायां[2] कस्मादहं दृढमनुरक्तः सहकारी च भूत्वेदानीं नितान्तमपरक्तोऽसहकारी च संवृत्तोऽस्मीति। ब्रिटिशशासनपद्धतेः संशोधने पञ्चविंशतिं वर्षाण्यनारतं पर्यश्रमम्। भरतवर्षस्याङ्ग्लदेशस्य च संबन्धविच्छेदमन्तरेणैवैतत्संशोधमं सुसाधमिति प्रत्ययं प्रत्यभिन्यविक्षि[3]। सत्सु बहुषु विसंवादेषु[4] षट्सप्तत्युत्तरनवशतोत्तरसहस्रतमं संवत्सरं यावदहं गाढमनुरक्तोऽभवम्। परं तत आरभ्य साहसानि पातकानि च परिच्छेदमत्यायन्। प्रमार्जनीयेषु चान्याय्याचारेषु शासितारो भरतवर्षस्य सत्त्वमवजानन्त इव दुष्कृतिनो नियोगिनः सममानयन् वृत्त्यादिदानेन पर्यतोषयंश्च। त एवान्योन्यसंश्लेषणानि व्यश्लेषयन्। ब्रिटिशशासनं हि स्वार्थंसिद्धये परेषां विनियोग इति नीतौ प्रतितिष्ठति। स्वार्थसिद्धसौकर्याय च विधयो विधीयन्ते। स्वार्थघटकानां हिताय च ते

---

१. तीषसहलुभरुषरिषः इति तादेराधंधातुकस्य तुमुन इड् वा।
२. ख्या प्रकथने इत्यस्य सार्वधातुके लिङि रूपम्।
३. अभिनिविशश्च इति विशतेराधारस्य कर्मसंज्ञा। तेन प्रत्ययमिति द्वितीयान्तं पदम्। नेर्विशः इत्यात्मनेपदम्।
४. विप्रलम्भो विसंवादः—इत्यमरः। अत्र षष्ठी चानादरे इति सप्तमी।

बुद्धिपूर्वमबुद्धिपूर्वं वा विनियुज्यन्ते। अणुरप्यव्यर्थो भीतिजननो विधिर्व्यूढस्य बलस्य प्रदर्शनं च प्रजा हतवीर्या अकार्ष्टाम्। अपदेश[1]-शीलत्वं चाजीजनताम्। भरतवर्षीयाः क्षुधार्ता उत्सन्ना विनिपतिताश्च। भूतपूर्वशासनक्रमापेक्षयाऽऽङ्ग्लदेशेन भरतवर्षस्य महीयोपाकारि। अनिष्टेन सहासंसर्गो धर्मः, एष चाचरितो मया। अतीते कालेऽसहोद्योगो दुष्कृतिषु बलात्कृतिरूप आसीत्। साहसं हि तदानीं साधकतमं मतम्। मया तु नूतनमजय्यं हिंसारूपमस्त्रं लोकेभ्योऽदायीति।

एतदनन्तरं प्राड्विवाकः श्रीगान्धिनं सम्बोध्य प्रावोचत्—

श्रीगान्धिन्! अभियोगान्प्रतिपद्यमानेन भवता दुःशकं मे कार्यं सुशकमकारि। तथापि न्याय्यस्य दण्डादेशस्यावधारणमिति यदवशिष्यते तदपि नाम तादृग् दुर्ज्ञेयं प्रमेयं यादृगिह देशे केनाप्यक्षदर्शकेन[2] परीक्ष्यं भवितुमर्हति। विधानं हि समं सर्वेषु वर्तते। नादः पुरुषविशेषमाद्रियते। तथापीदमनुपेक्ष्यं यानहमद्य यावत् पर्यैक्षिषि, आयतौ वा येषां व्यवहारपदं विचारयितुं लब्धावसरः स्यां तेभ्यः सर्वेभ्यो भवान् भिन्नकक्ष इति।

इदमप्यनुपेक्ष्यमेतद्देशजानां कोटिशो जनानां दृष्ट्या भवानग्र्यः स्वदेशभक्तो विश्रुतो नायकश्च। येऽपि भवता राजनीतौ विवदन्ते तेऽपि भवन्तमुच्चैरुद्देशं सौजन्योपेतमवदातचरितं चावगच्छन्ति। परमेष मे धर्मो भवन्तं विधानपरवशं जनमिव परीक्षेयेति।...इह भारते वर्षे विरला एव ते सन्ति ये नाव्थाजं शोचन्ति भवांस्तथाऽतनिष्ट यथा भवतोऽनर्गलत्वं येषां केषांचिद्राजमन्त्रिणामप्यसह्यं भवेदिति। परमयं भूतार्थः। एतदेवम्। यद्भवानर्हति यच्च प्रजानां हितायापेक्षितमिति भाति तदुभयं परस्परापेक्षमिति विवेक्तुं व्यवस्यामि[3]।

---

१. व्याजशीलत्वम्। अपदेशः पुमाँल्लक्ष्ये निमित्तव्याजयोरपि—इति विश्वः।
२. द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ—इत्यमरः। अक्षान् व्यवहारान् पश्यतीति। अक्षः कर्षे तुषे चक्रे शकटव्यवहारयोः—इति विश्वः।
३. यते इत्यर्थः। व्यवपूर्वः स्यतिरुद्योगे वर्तते।

आज्ञाप्यं दण्डमधिकृत्याधिकरणिकोऽभियुक्तं महात्मानं महता प्रश्रयेणेदमवोचत्—दण्डादेशविषये प्रकृतसंवादिनस्तस्य व्यवहारपदस्यानुकारो मेऽभीष्टो यस्य निर्णीतस्याद्य द्वादश समा गताः। श्रीबालस्य गाङ्गाधरेस्तिलकस्य व्यवहारपदमिहाभिप्रैमि। षडब्दान् कारावासो हि तत्रभवतो दण्ड आज्ञप्तोऽभूत्। कच्चिद्[1] भवान् श्रीतिलकेन समकक्षतां नानुपपन्नां मंस्यत इति। यद्यत्र देशे कालपर्यये[2] वृत्तपरिवर्तेन राजमन्त्रिभिर्नियतकालस्य लघूकरणं सम्भवि स्यान्नहि कश्चन मत्तोऽधिकतरं नन्दिष्यतीति।

प्राड्विवाको मां प्रश्रयेणातिशयीतेति श्रीगान्धी नाशकत् सोढुम्। स प्रत्यवोचत्—महत्येषा मे सत्क्रियाऽभिमततमोऽधिकारश्च यन्मन्नाम लोकमान्यस्य श्रीतिलकस्य नाम्ना सहोच्चार्येत। दण्डविषये त्विदमेव विवक्षे। अयं तथा लघुर्यथा केनापि न्यायाध्यक्षेणाज्ञाप्य आसीत्। सकलं कार्यक्रमं चाधिकृत्येदमभिधित्से—नाहमतो भूयांसं प्रश्रयमपेक्ष इति।

अवसितो विचारः। श्रीगान्धिनः सुहृदः सगद्गदं रुदन्तस्तच्चरणयोरपतन्। महात्मा सस्मितं तानापृच्छ्य शबरवतीकारागृहं प्राविशत्। प्रविष्टमात्रे च तस्मिन् व्यधीयतास्य[3] द्वारम्॥

इत्युपाध्यायश्रीचारुदेवशास्त्रिणः कृतौ श्रीगान्धिचरिते
चतुर्थः परिच्छेदः॥

---

१. कच्चित् कामप्रवेदने।

२. अतिपातस्तु स्यात्पर्यय उपात्ययः—इत्यमरः।

३. समव्रियतेत्यर्थः। अत्रापेरुपसर्गस्याकारस्य पाक्षिको लोपः। तथा च व्याकरणस्मृतिः—

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः।
आपं चैव हलन्तानां यथा वाचा निशा दिशा॥ इति

# अथ पञ्चमः परिच्छेदः

कारायां निरुद्धे महात्मनि सर्वथा साधु व्यवाहरन्नधिकृताः। तस्य वासाय परिसृष्टं परिष्कृतं चैकमागारं प्राकल्पयन्।

कारावासः

अभिरुचितं भोज्यमधिजिगांसितानि पुस्तकानि चोपाकल्पयन्। श्रीगान्धिनि सुतरां सगौरवास्ते तद्वरिवस्यायां[1] न कदापि प्रामाद्यन्, तन्निर्वृतये च सन्ततं प्रायस्यन्। एवमवेक्षितः संभावितश्च स महतौत्सुक्येनाध्ययने व्याप्रियत। विविधविषयावगाहिनीश्चाध्यर्धशतं प्राच्यानां प्रतीच्यानां च विपश्चितां कृतीः सादरमध्यैत। भरतवर्षीया आर्या मुहम्मदानुगाः ख्रिस्तानुयायिनश्च स्वं स्वं मतं विवृण्वन्ति पुस्तकानि तत्सकाशं प्राहिण्वन्। एवं हि तत्रभवान् स्वाध्ययनमधिकृत्यालेखीत् —

अहन्तावन्तं ग्रन्थसम्भारमध्येयं निरचिनवं यावते षण् निरोधवत्सरा न पर्याप्नुवन्। प्रथमे मासत्रय आसीदपरिच्छिन्ना ममेयमाशंसा भरतवर्षीयाः प्रस्तावसदृशं[2] समाचरिष्यन्ति, वैदेशिकवाससो विनियोगबहिष्कृतिं निर्वर्तयिष्यन्ति, काराद्वारश्चोद्घाटयिष्यन्तीति। परं द्रागहमवेदिषं नैतद् भविष्यतीति। अहमदर्शं कष्टसाध्यया निरुद्वेगया पञ्चभिर्वर्षैर्भूयोभिर्वा लभ्यया विरचनयैतत्सुसाधमिति। आदिष्टादण्डावधेः प्राङ्नाहं काराया विमोक्षमैषिषम्। अतोऽहं चतुःपञ्चाशद्वर्षो गलिताङ्गयष्टिरपि चतुर्विंशतिवर्षो युवेव सोत्साहमध्ययने प्रावृतम्। अहं कलामात्रमप्युपायुक्षि। विमोक्षसमय उर्दुद्रामिलयोर्विशेषज्ञता

---

१. शुषश्रूयामित्यर्थः। वरिवस्या तु शुश्रूषा परिचर्याप्युपासना—इत्यमरः।
२. प्रस्तावः स्यादवसरः—इत्यमरः।
३. कारागारद्वाराणि। स्त्री द्वार्द्वारं प्रतीहारः—इत्यमरः।

संस्कृतमर्मज्ञता च मे भविष्यत इत्याशासिषि। संस्कृतमूलग्रन्थाधिजिगांसा मे समर्धिष्यतीत्यमंसि। परं नैतेन भवितव्यमासीत्। अविरतं ममाध्ययनं दैवदुर्विपाकभूतेनोपतापेनातर्कितं व्यच्छेदि। अहश्चामोचीति।

कारायां निरुद्धस्य कालं गमयतः श्रीगान्धिनो यावद्वर्षद्वयं नात्यक्रामत्तावत्स आर्तिमार्च्छत्[1]। अगदङ्कारैः[2] परीक्षणे निर्वृत्ते शस्त्रवैद्यास्तं पर्यैक्षन्त शस्त्रक्रियां चावश्यकीममन्यन्त। कालहरणस्याक्षमोऽयमामय इति च त आकलयन्त। अतो महात्मा सेसन् इतिनाम्ना प्रतीतां पुण्यपत्तनस्थां चिकित्साशालां तूर्णमानाय्यत। यत्र समुचिता सर्वा संविधाऽभूत्। यत्र च महात्मनः पुत्रकलत्रादयः सगन्धाः[3] सुहृदश्च तमुपचरितुमभ्यन्वज्ञायन्त। शस्त्रक्रिया सफला समजनि। तेन प्रकृतिस्थशरीरता समभाव्यत। क्रमेण च बलं प्रत्यापद्यत।

विमोक्षः

अस्या रुजाया हेतोरधुना महात्मनः कारायां वासो नोचित इति साध्वपश्यन् राजमन्त्रिणः। देशावस्थितेश्च प्रशान्तत्वादनन्तरायं हितं च तस्य विसर्जनमजानन्। अतोऽशीत्युत्तरनवशतोत्तरसहस्रतमे विक्रमाब्दे माघेऽमावस्यायां सार्धसप्तनादमितायां प्रातस्तन्यां वेलायां गुल्मपतिर्मेडिक इत्याख्यश्चिकित्सको महात्मानमुपासर्पत् तद्विमोक्षप्रवृतिं चाशंसत्। इमां प्रवृतिं निशम्य महात्मा क्षणं तूष्णीमास्त ततः सस्मितमवोचत – किं भवान् किञ्चित्कालान्तरं चिकित्साशालायां मदीयमवस्थानमनुज्ञास्यति मय्यातिथ्यकारितां चाश्रयिष्यतीति। वैद्यः सहासं प्रत्यवोचत् —भवान् मदनुशासने वर्तताम्। अहं भवत उपचारेण महान्तमानन्द-

१. आर्तौ रोगः। आङ ऋच्छतेः क्तिनि उपसर्गादृति धातौ इति वृद्धिः।
२. वैद्यैः। अगदमरोगं करोतीति अगदङ्कारः। कारे सत्यागदस्य इति मुम्।
३. सगन्धाः सम्बन्धिनः। ज्ञातय इत्यर्थः। गन्धो गन्धक अमोदे लेशे सम्बन्धगर्वयोः इति विश्वः। वामश्चायं नदति मधुरं चातकस्ते सगन्धः इति मेघदूते।

माप्स्यामीति। ततो व्रणं विलिप्य पट्टिकया चावेष्ट्य पुनरगादीद् यदि महात्मानं दर्शका जनास्तदभ्याशमेष्यन्ति तर्हि तस्य प्रकृतिप्रत्यापत्तिः प्रतिभन्त्स्यते। अत इदमेव साधीयो यावन्न स सुतमां सुस्थो भवति तावत् सोऽत्यन्तं विश्रमयितव्य इति। यतोऽद्य यावद् व्रणं न यथेष्टं विरोपितम्। आसप्ताहद्वयं यदि स पर्याकुलीक्रियेत व्रणं विक्रियतेति।

अतोऽनन्तरं भिषङ्निदेशानुसारेण महात्मानं प्रवातं सातपं चागारान्तरमानयन्।

अचिरेण महात्मनो विमोक्षवार्ता सर्वस्मिन् देशेऽप्रथत। यः कश्चिन्न्यशामयत[1] स प्रामोदत। यत्र तत्रोत्सवा अक्रियन्त। महात्मन आरोग्यं क्षेमं च दुःखहरो हरिरयाच्यत।

देशदुःस्थितिः

कारायाः विमुक्तो महात्मा भयङ्करां देशदुःस्थितिम्[2]पश्यत्। नासीत् स प्रदेशो यत्र हिन्दवो मुहम्मदीयाश्च मिथो नाकलहायन्त[3]। शस्त्रैरस्त्रैरिष्टकाभिर्लोष्टैश्च प्रकाशं वाप्रकाशं वा व्यत्यघ्नन्[4]। विवृद्धमत्सरा उद्धूतकोपाटोपाः परस्परोच्छेदमचिन्तयन्। वेतालोपसृष्टा वा विनाशकाल उपागत इति विपर्यस्तबुद्धयो वा गर्हितं समाचरन्। पञ्चापप्रदेशे तु तेऽत्युत्कटमशात्रवन्[5]। अत्र मूलत्राणेऽमृतसरसि साधारणपुरेऽन्यत्र च बहुत्र हिन्दवो मुसलमीनाश्चान्योन्येन व्यगृह्णन्[6]। तेन च सर्वे जना

---

१. आकर्णयदित्यर्थः। शम लक्ष आलोचने इत्यस्य धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः। नान्ये मित इति मित्त्वनिषेधः। निशामय तदुत्पत्तिं विस्तराद्गदतो मम इति च प्रयोगः।

२. दुरः षत्वणत्वयोरित्युपसर्गत्वप्रतिषेधादुपसर्गात्सुनोतीत्यादीना न षत्वम्।

३. कलहं नाकुर्वन्। शब्दवैरकलहाभ्रमेघेभ्यः करणे इति क्यङ्।

४. परस्परमघ्नन् इत्यर्थः। न गतिहिंसार्थेभ्यः इति कर्मव्यतिहारे विहितस्यात्मनेपदस्य निषेधः।

५. शत्रव इवाचरन्। सर्वप्रातिपदिकेभ्यः क्विब्वा इति क्यङ्विषये वा क्विप्।

६. विपूर्वो ग्रहिः सकर्मकोऽकर्मकश्च। उभयथा हि प्रयोगा दृश्यन्ते।

अक्षुभ्यन् । अकिञ्चित्करमर्थं च हेतूकृत्य संप्रहर्तुं समनह्यन् ।

गदान्निर्गतो महात्मा चिकित्साशालाया अमदावाद इत्यत्रागमत् । कश्चित्कालं विश्रमोऽपेक्षित आसीत् । परं दिदृक्षूणां गमागमाभ्यां सर्वस्या दिशो विदिशश्च निमन्त्रणावाप्त्या लोकस्य च पर्यटनस्यापेक्षया स चिरं विश्रमं नालब्ध । अतो मासद्वयमाश्रमेऽवस्थाय स बहुषु प्रदेशेषु पर्याटीत् । श्रीगान्धी बहुधा लोकान्प्राबोधयत् । यथा भ्राता भ्रातरि वर्तते तथान्योन्यस्मिन् वर्तितव्यमित्यन्वशात् । परं नैतदनुशासनं कश्चिदवाधात् । बुद्धिविपर्ययो[1] हि तत्र बलवानभूत् । हिन्दुभ्यो मुसलमोनेभ्यश्चान्योन्यमभिशंसन्त्यनेकानि[2] पत्राणि महात्मानं प्राप्तानि । भूयोभिश्च पक्ष्यतादोषस्तत्रभवति समारोपितः ।

एवमवस्थिते सति महात्मा सविस्तरमेकं प्रबन्धं प्राकाशयत् । यत्र तदानीन्तनीं स्थितिं सम्यगालोचयत् । उपद्रवकारणान्युपावर्णयत् । हिन्दूनां मुहम्मदीयानाञ्चाचारविचारपद्धतिं प्रकृतिं च गुणदोषतः[3] पर्यच्छिनत् । शान्तिप्रिया निष्पक्षपाताश्च सुजना एतं प्रबन्धं नितान्तमभ्यरोचयन् । अत्र महात्मा हिन्दून् सम्बोध्येत्थं प्राचोदयत्—युष्माभिः साधीयो वर्तितव्यम् । कातर्यमुत्सार्यम् । धैर्यमालम्ब्य चेतरेषु विश्वसनीयम् । एवं हि सर्वं समाधास्यते । यतः सर्वस्य संकटस्य विघ्नस्य चापनयनं युष्मास्वायतत इति ।

अत्रान्तरे देहल्यां हिन्दवो मुहम्मदीयाश्चावैरायन्त । एतदाकर्ण्य श्रीगान्धी नितान्तमदूयत । प्रशान्ते सत्युपद्रवे स देहलीमगच्छत् । लब्धतदागमप्रवृत्तयः परःशताः पौरास्तं प्रत्युदगच्छन् । जयतु जयतु

---

१. स्याद् व्यत्यासो विपर्यासो व्यत्ययश्च विपर्यये—इत्यमरः ।
२. दोषमारोपयन्तीत्यर्थः । महापापोपपापाभ्यां योऽभिशंसेन्मृषा परम् इति याज्ञवल्क्यस्मृतौ ।
३. गुणान्दोषांश्चाधिकृत्येत्यर्थः । ल्यब्लोपे कर्मण्युपसंख्यानम् इति पञ्चमी । पञ्चम्यास्तसिरादेशः ।

महात्मेति निनदैर्दिशः प्रतिध्वानिता अभूवन् । श्रीगान्धी वृत्तान्तजातं निपुणमैक्षत । परःसहस्रान् समवेताञ्जनान् सम्बोधयन्स एवं स्माह— अद्य भवन्तो मदागमं प्रतीक्षमाणा इहासीना महान्तं क्लेशमन्वभूवन् । नाहं लघुतरं[1] भवतां पुरः संनिधातुमशकम् । अतः क्षमां याचे । नाहमिह काञ्चिद्वार्तां श्रावयितुमागतोऽस्मि यया भवतां मम च परितोषः स्यात् । ममागमनकारणं च नाविदितं भवताम् । देहल्यां हिन्दवो मुहम्मदीयाश्च संप्राहृषतेति[2] दूषितमस्या अवदातं यशः ! उपक्रोशश्च[3] महान् संभूतः । अनेन व्यतिकरेण सर्वोऽयं देशो विकारस्य गमनीयो भवेदित्याशङ्क्यते । अस्य च प्रसरः कथं वार्येतेति चिन्तयन्ति नेतृतमा नो बन्धवः । परमद्य यावन्न तदुपायः कश्चिदुपलब्धो यमावेदयेय । अतोऽहं खिद्ये[4] ।

अहमत्र भवतो विज्ञापयेऽस्माभिः सर्वैः परमेश्वरो नो धियं प्रचोदयेदिति प्रार्थनीयः, येन वयं स्वधर्मं परमार्थतो ज्ञात्वाऽऽचरेमेति । अहमितः श्वो गन्तास्मि यतोऽस्मदावादे ऽल्पीयान्व्यापारः करणीयोऽवशिष्यते । विद्युद्वार्तां प्राप्य त्वरितं ततः प्रास्थिषि । यदि देहल्यां मन्निघ्नं किमपि कर्तव्यमस्ति तर्ह्याश्विने मासि कृष्णद्वितीयायां प्रत्यावर्तितुं प्रभवामि । अतः परं मे न किञ्चिदाख्येयम् । अहं सदो विसर्जयामि । भवन्तः सर्वे यथास्वं गृहाणि यान्तु । अत्रावस्थितत्या नास्ति कश्चिदर्थ इति ।

विरतवचसि श्रीगान्धिनि जयतु जयतु महात्मेति घोषः समुदचरत् । श्रद्धया प्रयुक्ताः सामाजिकाः पीठं प्रति तरसाऽधावन् । कथं कथमपि च महात्मा मोटराख्यं बाष्पयानं यावदानीयत ।

---

१. द्रुततरम् । अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्—इत्यमरः ।
२. अन्योन्यं प्राहरन्नित्यर्थः । हरतेरप्रतिषेधः इत्यात्मनेपदं प्रतिप्रसूयते ।
३. उपक्रोशो निन्दा, गर्हा । राज्सेन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा इति रघौ ।
४. कर्मकर्तरि प्रयोगः । नायं धातुर्दिवादिषु पठितः ।

भाद्रे शुक्लैकादश्यां कोहाट इत्यत्र मुसलमीना हिन्दूनायुध्यन्त। मुहम्मदीयभूयिष्ठा सा पूः। तेन तत्र हिन्दवोऽदयं विशस्ताः। केचित् संत्रस्ता जीवितस्य हेतोर्विद्रुताः। परःशता गृहा भस्मसात्कृताः स्वापतेयं[1] चापहृतम्। अशरणाः केचिद् मुहम्मदमतं हठाद् ग्राहिताः। एतेन व्यतिकरेणोभयेषां वैमनस्यमतितरामुपचितम्। तेनात्यन्तं दूनो महात्मोपद्रवव्युपरमामोघोपायचिन्तनायां प्रवृत्तः।

त्रैसप्ताहिकमुपोषणम्[2]

अमदावाद इत्यत्रापेक्षितं कृत्यं निर्वाह्य श्रीगान्धी देहलीं प्रत्यावर्तत। सर्वे देहलीस्था अदिदृक्षन्त विमनसां हिन्दूनां मुहम्मदीयानां च साम्मनस्यापादनाय महात्मा कमुपायमास्थास्यतीति। सर्वे सोत्कण्ठमशुश्रूषन्त संमर्दप्रशममधिकृत्य किं नः सन्देक्ष्यतीति। अत आश्विने मासि कृष्णपञ्चम्यां श्रीगान्धिनो विस्रम्भभाजा कार्याधिकृतेनेयं सन्देशवाक् प्रकाशिता—

अचिरसंवृत्ता व्यतिकरा मयातिदुःसहाः। आशाभङ्गश्च मे महीयान्। इयं नो धर्मदेशनाऽत्यन्तापन्नेन[3] व्यापदं वारयितुमनीशेन जनेनोपोषणेनेश्वरप्रणिधानेन च कालो नेय इति। अतोऽहमपि तथैवाचरिष्यामि। लेखैर्वावाचिकैर्वा हिन्दूनां मुहम्मदीयानां चान्योन्यवृत्तौ न विशेषः कश्चिदभूत्। अतो मयैकविंशतिं वासरानुपवस्तव्यमित्यवश्यं मन्ये। अयं म उपवासोऽद्य प्रारप्स्यत आश्विने मासि शुक्लैकादश्यां च पर्यवसास्यते[4]। अहमहरहो लवणितमलवणं च पानीयं

---

१. स्वपती साधु स्वापतेयं रिक्थम्। पथ्यतिथिवसतिस्वपतेर्ढञ्। द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु—इति धननामस्वमरः।
२. त्रिसप्ताहं भूतं त्रैसप्ताहिकम्। कालाट्ठञ्। कालात् इत्यधिकारात् तमधीष्टो भृतो भतो भावी इति भूतेऽर्थे प्रत्ययः। सप्ताहशब्दो न संख्या। अतः संख्यायाः संवत्सरसंख्यस्य च इत्यनेनोत्तरपदवृद्धिर्न।
३. आपन्न आपत्प्राप्तः स्यात्—इत्यमरः।
४. षोऽन्तकर्मणि इत्यस्मात्कर्मणि लृट्।

व्रतयिष्यामि'। यद्यहमेतद्व्रतं प्रायश्चित्तमित्येवाचरिष्यं नास्य प्रख्यापणमपेक्षितमभविष्यत्। परमेतदाशंसमानोऽहमावेदयामि ये हिन्दवो मुहम्मदीयाश्चान्योन्यविनाशाय प्रयतन्ते, संसृज्य च न व्याप्रियन्ते त इमामावेदनां हृदयग्राहिणीं मेऽभ्यर्थनां गणयिष्यन्तीति।

अतोऽहं सर्वेषां समाजानां नेतॄन् सप्रश्रयं प्रार्थय इमान्मानुष्यकस्य धर्मस्य चापकर्षकानुपद्रवान् पर्यवसाययन्त्विति। इमे वृत्तान्ताः शंसन्ति लोक ईश्वरं विरुणद्धीति। यतेमहि पुनरपि देवतां हृदये दधीमहीति।

इतः पूर्वं श्रीगान्धी चौरीचौरा इत्यत्र जनताकृतं प्रमाथं निमित्तीकृत्य पञ्चाहान्युपावसत्। ततोऽपि प्राग् आफ्रीकाभूखण्डे गृह्ये कस्मिंश्चित्कर्मण्यसाधुत्वं समीक्ष्य स चतुर्दश दिवसानुपावसत्। परं त्रैसप्ताहिकमनशनं निशम्य सर्वे भरतदेशीया अस्वस्थमनसोऽभवन्। अतो ये नेतारो महाजनास्तदानीं देहल्यामासत ते महात्मानमुपेत्य सनिर्बन्धं प्रार्थयन्त—आसेधेनोपतापेन च कार्श्यं गतेयं भावत्की तनूः। अतो हातव्योऽयं विनिश्चय इति। महात्मा तु प्रत्यवोचत्—अहं व्यवसितं व्रतमवश्यमाचरिष्यामि। अत्रान्तरे यथा हिन्दूनां मुहम्मदीयानां च वैमनस्यं व्येतु सौहार्दं चास्तु तथा भवन्तः प्रयतन्तामिति।

उपवासं न्याय्यं प्रतिपादयितुकामो महात्मा तरुणभरतवर्षनामके स्वके साप्ताहिके वार्तापत्र इत्यलेखीत्—

अहं पठकान्' विश्वासयितुमिच्छामि नायमुपवासोऽसमीक्ष्य

१. मुण्डमिश्रश्लक्ष्णलवणव्रतेत्यादिना णिच्। व्रताद्भोजनतन्निवृत्त्योः इति वार्तिकेन क्रियाविशेषे भोजनेऽर्थे णिच्।
२. मनुष्यस्य भावः मानुष्यकम्। योपधाद्गुरूपोत्तमाद्वुञ्।
३. पठन्ति इति पठकाः। पचाद्यच्। ततः स्वार्थे कन्।

प्रारब्ध इति। यत्सत्यमसहकारिताया उद्भवात्प्रभृत्यहं संशयितजीवितोऽभूवम्। नाहं तां रभसोपाक्रंसि[1]। अहमेतदानुषङ्गिकाननर्थान्पर्याप्तं पूर्वं प्राबुधम्। न ह्यध्यात्वा देवतां किञ्चिदारभे। स्खलनधर्मा मनुष्यः। स स्वस्य प्रक्रमाणां युक्तरूपतां[2] नालं[3] वेद। यत्स स्वस्य प्रार्थनस्योत्तरं गणयेत्साऽहंयुताप्रतिश्रुद्भवेत्[4]। श्रमवर्जिताया वैधात्र्या अनुशिष्टेरात्मानं पात्रीकर्तुमिह मानवेन तथा विमलमानसेन भाव्यं यथाऽनिष्टचिन्तनाऽसंभविनी स्यात्। अहं तथा विमलमना अस्मीति नाभिमन्ये। अहं चेष्टे प्रयस्यामि श्रमामि च। सिद्धिश्च मे नास्ति। परं परेषामात्मनश्चानुभूत्यैवाहं समुच्छ्रायमीप्सामि। अहमेकमद्वितीयं निर्गुणं ब्रह्म प्रत्येमि। ऐकात्म्यमिदं सर्वमिति च। देहनानात्वं ह्यकिञ्चित्करम्। एक एव नः सर्वेषामात्मा। आदित्यरश्मयो वक्रीभावेन बहुत्वं यान्ति। परं सप्रसवास्ते[6] भवन्ति। अतोऽहं महापातकिनोऽपि जनादात्मानं विवेक्तुं न क्षमे। (न च धर्मिष्ठेन मे तादात्म्यं प्रतिषेध्यम्)। अतः कामये वा न वा मदनुभवफलेन सर्वसजातीयगामिना भाव्यम्। न चाहमनुभवमन्तरेण निर्वोढुं क्षमः। जीवितं ह्यनन्तानुभवपरम्परा।

शबरवत्या देहल्यै प्रतिष्ठासुरहं श्रीमत्याः सरोजिनीनायिकात इत्यर्थकं पत्रं प्रापम्—प्रशमविषयधर्मवाक्योपन्यासैः प्रवर्तिकाभिर्वा

---

१. उपोपसृष्टात् क्रमो लुङ्। प्रारप्सि इत्यर्थः। प्रोपाभ्याम्० इत्यात्मनेपदम्। स्नुक्रमोरनात्मनेपदनिमित्ते इतीण्न।

२. युक्तरूपमतियुक्तम्। तस्य भावः। प्रशंसायां रूपम्। प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा न तु स्तुतिः। तेनेहापि भवति—चौररूपोऽयं यदक्ष्णोरप्यञ्जनं हरति—इति तत्त्वबोधिनीकारः।

३. नात्यर्थम्। अलं भूषणपर्याप्तिशक्तिवारणवाचकम्—इत्यमरः।

४. अहंयुः अहंकारवान्। अहंशुभमोर्युस्। तस्य भावोऽहंयुता।

५. प्रतिश्रुत् प्रतिध्वनिः। बद्धप्रतिश्रुन्ति गुहामुखानि इति रघौ।

६. समानः प्रसवो येषां ते। प्रसूयतेऽनेनेति प्रसवः कारणम्। एकयोनय इत्यर्थः।

वाऽभिनार्थः । अव्यर्थः कश्चिद्योग[1] उपलम्भनीय इति । स्थाने[2] सा मामत्र प्रष्टव्यमपश्यत् । न खल्वहं[3] प्रजानां प्रचितोत्साहसमुत्पादकारणतामगच्छम् । स चोत्साहस्तद्गतां विनाशकारो निरपादी[4]त्यवश्यं मयोपायः कश्चिदास्थेयः । अहमिदमुत्तरं प्रादाम्—मन्दमन्दं निरन्तरमुद्यम्याभ्युपायप्राप्तिमाशास इति । कर्मणाऽसहचरितं प्रार्थनं प्रणिनददारकूटं वा निक्वणद् झल्लकं वा । नाहं तदाऽवेदं दीर्घोऽयमुपवास उपायो भविष्यतीति । इदं चेदानीं वेद नायं तथा दीर्घो यथा मनस्तापशमनायालं भवेदिति । किमहमस्खालिषमुताधीरोऽभूवमुताहोऽनिष्टमापूपुषम्[5] । अहमेतत्सर्वं वाऽकार्षमेकतरमपि[6] वा नाकार्षम् । तदेवाहं वेद यदहं पुरः प्रपश्यामि । यदि सम्प्रति वैरायमाणैर्लोकैः पारमार्थिक्यहिंसा सत्यं चास्थास्येतां न तर्हि प्रवर्तमानं मारात्मकं नियुद्धं समभविष्यत् । अभिव्यक्तं मे पर्यनुयोज्यता क्वचिदस्तीति ।

इह नृणां वरिष्ठ एतद्देशस्य चोदात्ततमो नायकः स्वानुगानां दुष्कृतीनां कृते स्वं शास्ति तदेनोनिष्कृतये च देहं क्षपयतीति चिन्तयित्वाऽऽत्मनाऽपात्रपन्त हिन्दवो मुहम्मदीयाश्च । यत्र तत्रान्तर्भेदमपाकर्तुं प्रशमं च प्रतिष्ठापयितुं संमिलनान्यभूवन् । संमिलिता जना महात्मन आरोग्यं क्षेमं च भगवन्तमीशमयाचन् । हिन्दूनां मुहम्मदीयानां शिष्याणां खिस्तानुगानामाङ्ग्लानां च मुखराणां हृदयान्युदताम्यन् । अतस्ते देहलीमागत्यैक्यनिष्पादिकां मन्त्रणसभां संविधातु-

---

१. योग उपायः । योगः संनहनोपायध्यानसंगतियुक्तिषु—इत्यमरः ।
२. साम्प्रतम् । युज्यत इत्यर्थः । युक्ते द्वे साम्प्रतं स्थाने—इत्यमरः । स्थाने इति सुबन्तप्रतिरूपकमव्ययम् ।
३. अत्र खलुशब्दो जिज्ञासायाम् । निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु —इत्यमरः ।
४. निःपूर्वात्पद्यतेर्लुङि रूपम् । चिण् ते पदः । चिणो लुक् । निष्पन्नोऽभूदित्यर्थः ।
५. पुष धारणे इत्यस्माच्चौरादिकात्कर्तरि लुङि रूपम् ।
६. एकतरात्प्रतिषेधो वक्तव्यः इति वार्तिकेन अदडो निषेधः

मारभन्त । येन यस्मा अर्थाय महात्मना महानयं कायक्लेशः सोढुं व्यवसितः स फलवत्तामासादयेत् ।

ऐक्यनिष्पादिका मन्त्रणसभा

आश्विने मासि कृष्णत्रयोदश्यामपराह्णे सङ्गमरङ्गे ऐक्यनिष्पादिका मन्त्रणसभा मिलिता । हिन्दूनां मुहम्मदीयानां मतान्तरस्थानां च द्विशतं नेतारस्तत्र समवायन् । अचिन्तयंश्च तानुपायान् यैरविरोध ऐक्यं च स्याताम् । प्रथमं मुहम्मदीयानां मूर्धन्यो मुहम्मदालिर्महात्मनो दीर्घायुष्ट्वं परमात्मानमचायत ततः प्रतिनिधींश्च सदकुरुत । ततः पण्डितः श्रीमोतिलालो नेहरुरध्यक्षासनं पर्यगृह्णीत । तदात्मजः श्रीज्वाहरलालो नेहरुस्तदानेकेभ्यो देशविभागेभ्य आगता महात्मनो दीर्घायुष्ट्वप्रार्थनाविषया हिन्दुमुस्लिमैक्याश्रयाश्च संदेशवाचोऽवाचयत् । सन्देष्टारो मन्त्रणसमाजस्य साफल्यं कामयमाना अपि कार्यान्तरोपरोधवशान्नोपस्थातुमपारयन् । ततोऽनन्तरं श्रीपण्डितमोतिलाल इति प्रास्तावीत्—

इयं सभा महात्मनः श्रीगान्धिन उपवासेन निमित्तेन शोचतितमामत्यर्थं चोद्विजते ।

इयं सभा दृढं मन्यते संज्ञाने धर्मे च नियन्त्रणभावोऽभिमततमोऽपेक्षिततमश्चेति । इयं च येषां केषाञ्चिद्देवतायतनानां दूषणं धर्मान्तरानुवृत्तेः[2] परित्यक्तपूर्वं धर्मं वा प्रत्यावृत्तेर्यस्य कस्यचिच्च विप्रकारं शासनं वा बलवद् गर्हते । गर्हते च स्वधर्मं बलाद् ग्राहयितुं प्रयत्नान् । धिक्करोति च पराधिकारानवगणय्य स्वधर्मक्रियाणामनुष्ठानम् ।

सभ्याश्च महात्मानमाश्वासयन्ति प्रतिजानते च वयं यावच्छक्यं लोकेनासां व्यवस्थानामनुवृत्तिं च निन्दिष्याम इति ।

---

१. दीर्घमायुरस्येति दीर्घायुः । तस्य भावः । आदेशप्रत्यययोः इति प्रत्ययसकारस्य मूर्धन्यादेशः ।

२. विभाषा गुणेऽस्त्रियाम् इत्यत्र विभाषेति योगविभागादगुणे स्त्रियां च हेतौ पञ्चमी ।

इयं च सभाऽध्यक्षमधिकारोति स महात्मानमुपेत्य दृढामिमां प्रतिज्ञां निवेदयेत् । सभ्यानां प्रतिनिधीभूय चोपवासपरित्यागं प्रार्थयेत येनेयं सभा तत्रभवतः सहकारितयाऽनुशासनेनाऽधिष्ठातृतया चोपकृता त्वरितं बहुलीभवतोऽस्यानिष्टस्य साधकतमं वारणोपायं चिन्तये-दिति ।

शय्यामधिशयानो महात्मेदमुत्तरं प्रादात्—

प्रियश्रीमोतीलाल !

स्नेहार्द्रयाऽनुक्रोशाविष्टया च भवदधिष्ठितया सभयैष उपन्यासः स्वीकृतो यं भवान् ह्यो मह्यमवाचयत् । विज्ञापये भवान् सभां श्रद्धापयेदहं प्रकाममस्याः काममन्ववर्त्स्यमशक्यञ्चेदिति । परमह मसकृदात्मानं पर्यैक्षिषि व्रतभङ्गस्य संभवं च नोपालप्सि । इदं हि मे धर्मो माऽनुशास्ति व्रतमारभ्य न हाप्येत[2] श्रेयसे वा कृतं प्रतिज्ञानं न भज्येतेति । भवांश्चेदं वेदाद्य चत्वारिंशतोऽप्यधिकानि वर्षाण्येव-ञ्जातीयकनियानुरोधेन जीवितमतिवाहयतो मम ।

गहनानुपवासहेतून्नाहमत्र पत्रे व्याकर्तुं पारयामि । एतेन ह्युपवा-सेनाहमात्मनः श्रद्धां प्रकटयामि । नह्यसहकारितायाश्चिन्तनमाङ्गल-विद्वेषेण प्रयोजितम् । निःप्रमाथं च तद्रूपं प्रेम्णाऽऽङ्गलसंवननाया-भिप्रेतम् । न केवलमनयाभीष्टस्तदर्थो न साधितोऽपि त्वेतज्जनितया शक्त्या परस्परद्रोहः समुद्भावितः । एतया संवित्त्या[3]ऽऽकुलीकृतोऽ-हमनन्यथाकरणीय एतस्मिंस्तपसि स्थितः ।

अतोऽयमुपवासो द्वयमेवान्वेति मां च परमात्मानं च । तस्मादहं प्रार्थये यदहं व्रतं न व्यलोपयं तन्मे मृष्यतामिति । इदं च याचे भवन्तो

---

१. विस्तारं गच्छत इत्यर्थः ।

२. ओहाक् त्यागे णिचि कर्मणि लिङि रूपम् । अत्र स्वार्थे णिच् । पञ्चैतान्य महायज्ञान्न हापयति शक्तितः इत्यत्र मानवे धर्मशास्त्रे यथा ।

३. संवित्तिरनुभवः । श्वस्त्वया सुखसंवित्तिः स्मरणीयाऽधुनातनी इति किरातार्जुनीये ।

मामुत्साहयिष्यन्ति क्षेम्यां च व्रतपूर्तिं व्रतपतिं परमेश्वरमभ्यर्थयिष्यन्त इति ।

अतोऽहं सप्रश्रयं[1] सभां प्रेरये सा प्रतिज्ञाभिव्यञ्जितं सर्वं मय्यनुरागं साभिनिवेशं कृतेन स्थिरेणावितथेन च तेन कर्मणा विपरिणमयिष्यति यत्स्वोद्देशभूताय हिन्दुमुसलिमसांहित्याय[2] कल्पिष्यत इति ।

आश्विने मासि शुक्लैकादश्यामध्यर्धनादमितायां वेलायामुपवासावधिरपूर्यत । पारणायाः[3] प्राग्वैद्या आकार्यन्त ।

व्रतपूर्तिः

तान्महात्मेत्यवादीत् – भवतां मयि प्रणयेना[4]सक्त्या च सुतरामनुगृहीतो ऽस्मि । ततः स्निग्धः सादरश्चातिथ्यकृन्मुहम्मदालिरन्वागात् । ततः सर्वे युगपदुत्थाय महात्मनोऽगारं प्राविशन् । संनिहिता अङ्गनाः शयनान्तिक आसत । यतिः श्रद्धानन्दो ध्याननिमीलिताक्षः खट्वापादमूल उपाविशत् । पण्डितः श्रीमोतिलालो देशबन्धुश्चित्तरञ्जनदासः स्वतन्त्रोऽबुल्-कलामोऽलिभ्रातरौ चेमे सर्वे शय्याभ्यर्णं[5] समासत । ततो मुहम्मदीयधर्मसंहितायाः पाठादूर्ध्वं ख्रिस्तवेदोपनिषच्छ्रुतयश्च सस्वरमगीयन्त । श्रीबालकृष्णश्च शिष्यः परमार्थभागवतं निरूपयन्तीं गीतिकामगायत् ।

ततोऽनुसारीत्यभिधो भिषङ् नारङ्गरसमानयत् । तं महात्माऽपिबत् । एष ह्यस्य पारणाभूत् । यस्तत्र परमात्मोपकारस्तवोऽभूद् यश्च संनिहितानां गुरुः प्रहर्षः स उभयो नः परिच्छेदमत्यन्तमत्येति ।

१. विनयप्रश्रयौ समौ—इति यादवः ।

२. पर्याप्तिवचनस्य क्लृपेरलमर्थत्वान्नमःस्वस्ति० इति चतुर्थी । न तु क्लृपि सम्पद्यमाने इत्यनेन । तेन हि प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी विधीयते । यथा मूत्राय कल्पते यवागूः इत्यत्र ।

३. पारणा व्रतान्तभोजनम् ।

४. प्रणयेन प्रेम्णा । प्रणयास्त्वमी । याच्ञाविस्रम्भप्रेमाणः—इत्यमरः ।

५. उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्—इत्यमरः । अर्दं गतौ । कर्मणि कर्तरि वा क्तः । अभेश्चाविदूर्ये इतीडभावः ।

दिष्टया सक्षेमं व्रतपारणेन भवान्वर्धत इति सर्वे संप्राववन्त[1]। निश्चेष्टो महात्मा तूष्णीं व्यश्रमत्। अचिरेण तदागारं व्यरिच्यत। श्रीगान्धी वाचंयमोऽवृतत् क्षिप्रं च निरवृणोत्[2]। ततस्तिस्रस्तिस्रो होरा व्यवधाय नारङ्गरसोऽपाय्यत। अपरेद्युः पयःपानमारभ्यत। ततः क्रमेणान्यदभ्यवहार्यमुपाकल्प्यत। दीर्घेणैतेनोपवासेन कृशतनुर्महात्मा निःसत्त्वः समजायत। अतो दिदृक्षवो जनास्तं द्रष्टुं नाभ्यन्वज्ञायन्त।

समृद्धे सति महात्मनो व्रते सर्वस्मिन्देश उत्सवा अक्रियन्त पारमेश्वर उपकारश्चास्तूयत। राजमन्त्रिणां मूर्धन्या अन्ये च नरर्षभाः स्वप्रीतेः परितोषस्य च द्योतिकाः सन्देशवाचो महात्मनेऽहारयन्। ताः समधिगत्य महात्मामुं सन्देशं प्राचारयत्—

हिन्दुमुहम्मदीयानामैक्यं सर्वप्रथमं साध्यमित्ययं मे सन्देशः।

कतिपयैरहोभिर्महात्मा सत्त्वं प्रत्यापद्यत निरुक्तस्यैक्यस्यापादने च सर्वात्मना प्रावर्तत।

एकाशीत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे पौषे मासि प्रतिपदायां

बिलग्रामकाङ्ग्रेसोपवेशनम्

बिलग्राम इत्यत्राखिलभरतवर्षीयकाङ्ग्रेसपरिषत्संमेलिष्यतीति निश्चितम्। श्रीगान्धी चाध्यक्षासनं परिग्रहीष्यतीति च निर्णीतम्। अध्यक्षतामनभिलषन्नपि महात्मा स्वदेशजानां प्रणयं[3] विहन्तुं नाशकत्। यत्तत्रभवान् पारिषद्यानाभाषत तत्समासेनेहोपन्यस्यते—

यदवस्था वयं तदवस्थानां नो विश्रम आवश्यकः। यतो यदि विरलाः केचिदसहकारितायां यथापूर्वं दृढं विश्वसन्ति तदनुषक्ता

---

१. सहाब्रुवन्नित्यर्थः। व्यक्तवाचां समुच्चारणे इत्यात्मनेपदम्।

२. वृञ् वरणे स्वादिः। निर्वृतिमाप्नोदित्यर्थः। निर्ववार मधुनीन्द्रियवर्गः इति शिशुपालवधे।

३. प्रणयो याच्ञा। प्रणयास्त्वमी। याच्ञाविस्रम्भप्रेमाणः इत्यमरः।

भूयांसस्तु वैदेशिकवासःपरित्यागव्यतिरिक्तां तां न प्रतियन्ति। अनेका विशतयो विधिज्ञानां स्वां पूर्वां वृत्तिं पुनरुपजीवन्ति। केचित् तत्परित्यागमनुशोचन्ति। व्यवस्थापिकाः सभाः परिहृतवन्तो बहवस्ताः पुनराश्रयन्ते। तदाश्रयं च प्रतियतां संख्या प्रचीयते। परःशता राजकीयविद्याशालाः परित्यक्तवन्तः कुमाराः कुमार्यश्च पुनस्ताः प्रपद्यन्ते। अवकाशापर्याप्तेः सर्वे प्रविविक्षवस्तत्र प्रवेशं न लभन्त इति वार्ता। एवमवस्थितेऽधिकरणादीनां परित्यागो दुष्करोऽनुपपन्नश्च। नहि काङ्ग्रेसपरिषद्विधिज्ञादीनुपेक्षितुमर्हति। साम्प्रतमेषां बहिष्कृतिस्तथैवाशक्या यथासहकारिणाम्। उभयैरपि काङ्ग्रेसपरिषद्यन्तर्भवितव्यम्। न तैरन्योन्यार्था विहन्तव्याः। न च विपक्षवणद्गुदोषा विमर्ष्टव्याः। यद् हिन्दुमुहम्मदीयसांहित्यविषये सुवचं तद्राजकार्यनिर्वाहयितृषु कृतसंसर्गेषु जनेष्वप्यविपरीतम्। अस्माभिः परस्परस्मिन् क्षमावद्भिर्भवितव्यमागमयितव्यं[1] च कालेन मतपरिवर्तो भविष्यतीति। नात्रैवास्माभिर्विरन्तव्यम्। काङ्ग्रेसपरिषदोऽपक्रान्ता विमुखीभूता जनाः प्रणोद्याः पुनस्ते तां समवयन्त्विति। यद्यसहकारिता परित्यक्तास्ति तर्हि तेषां बहिःस्थितिर्नोपपद्यते। अस्माभिः काङ्ग्रेससदस्यैस्तेऽनुनेतव्याः। सौहार्देन च निमन्त्रणीयाः। हतप्रत्यूहश्च तेषां संगमः करणीयः।.....

तन्तुवापचक्रमधिकृत्य सविस्तरमभ्यधां यतः स्वदेशजेभ्यः किमप्यन्यच्छ्रेयो मे सन्देष्टव्यं नास्ति। यदि स्वराज्यावाप्तिन्र्याय्यैर्निरुपप्लवैश्चोपायैश्चिकीर्षिता तर्ह्यहमव्यर्थं साधनान्तरं नोपलभे। यथाहं प्रागेवावोचमिदमेव सर्वदेशस्वीकार्यं प्रमाथस्थानीयं वर्तते। अहं सत्याग्रहं श्रद्दधे। परं तावत् सत्याग्रहमास्थातुं न प्रभवामो यावद् वैदेशिकवासःपरिहारं न साधयामः। इदानीं भवन्तः स्फुटमुपलप्स्यन्ते किं कारणमहं काङ्ग्रेसपरिषदोऽनर्थकं मार्गदेशको भविष्यामि तन्तु-

१. त्वरा न करणीयेत्यर्थः। अत्रार्थे आगमेः क्षमायाम् इति वार्तिकं लिङ्गम्।

वापचक्रविषयं मन्मतं चेद्भवतामग्राह्यं भवेत्। नूनं भवन्तो यथान्याय्यमेव मां देशोत्कर्षप्रतिबन्धकं गणयिष्यन्ति यदि भवन्तस्तन्तुवापचक्राधारभूतस्य तत्त्वस्य मे व्याक्रियां[1] भ्रान्तिमूलिकां पश्यन्ति। परं यद्येषोपपत्तिमती वा हृदयङ्गमा वा नास्ति तर्हि भवन्तः स्वधर्मात्प्रमदिष्यन्ति मदीयं नायकत्वं चेन्न निराकरिष्यन्ति। यत्पुरा किल लार्डवलिङ्गडनमहाशयोऽस्मानुद्दिश्योदाहरद्भरतभूमिजा नेति वक्तुं क्षमन्त इति तन्मा कश्चिदिदानीं वोचत्। यदि भवन्तो मदीयेऽस्मिन्नुपन्यासे न विश्वसन्ति नियतं तत्प्रत्यादेशः स्वराज्यावाप्तेरुपकरिष्यति।

हिन्दुमुहम्मदीयसाहित्यं प्रयोजनवत्तया कर्तनचक्रान्न हीयते। इदं हि न आत्मा। नात्र विषये बहु विवक्षे। एतद्धि स्वराज्याधिगमायापेक्ष्यतेतमामिति प्रायशः सर्वैः प्रतिपन्नम्। प्रायश इति साभिप्रायं प्रयुञ्जे। अहं हि साधु वेद्मि सन्तीह केचिद्ये मन्यन्ते यदि वयं कृत्स्नं भरतखण्डं हिन्दुत्वं मुहम्मदीयत्वं वा नेतुं न पारयामस्तर्हि ब्रिटिनायत्ततालक्षणा साम्प्रतिकी नोऽवस्थितिरेव श्रेयसीति। दिष्टचाल्पसंयास्ते भवन्ति।.........

अस्पृश्यताऽपरं स्वराज्यप्राप्तेः प्रतिबन्धकम्। एतन्निराकृतिस्तथैवापेक्ष्यते यथैव हिन्दुमुहम्मदीयैकतावाप्तिः। अयं हि सारतो हिन्दूनां विचारविषयः। हिन्दवश्च तावन्न स्वराज्यमर्हन्ति तदधिगन्तुं वा शक्नुवन्ति यावन्न विनिपातितेभ्यो जनेभ्यः पुनः स्वातन्त्र्यं प्रतिपादयन्ति। कारुणिको भगवान् भूतभावनो[2]ऽस्पृश्यं कमपि जनवर्गमसृजदिति तन्निन्दा। हिन्दुभिः काङ्ग्रेसपारिषद्यैरेषा नियन्त्रणा निराकरणीयेत्यवधारणीयमिति।

बिलग्रामात्प्रतिनिवृत्तः कञ्चित्कालं लब्धविश्रमो महात्मा निरुक्तपूर्वं स्वस्य संमतं कार्यत्रितयं निविष्टचेतसा प्रकृतः[3]। एतदर्थमेव

---

१. व्याख्यामित्यर्थः।

२. ब्रह्म। भूतानि भावयति सृजतीति व्युत्पत्तेः। नन्द्यादिल्युः।

३. कर्तुमारब्धवानित्यर्थः। प्रशब्द आदिकर्मणो द्योतकः। आदिकर्मणि क्तः कर्तरि च इति कर्तरि क्तः।

तत्रभवान् कदाचिद्वङ्गेषु पर्यटन् कलिकातां गतः। तत्र खिस्तीयप्रचारकमण्डलेन निमन्त्रितो यदवादीत्तत्तस्य खिस्तमतविषयं हिन्दुधर्मविषयं च दर्शनं विशदीकरोतीति समस्य विन्यस्यते। तद्यथा—

न भवतां बहवो विदुरहं खिस्तीयैः न खिस्तीयाभासैः परं परमार्थखिस्तीयैः—एकोननवत्यधिकाष्टादशशततमे खिस्तवत्सरे संसर्गमकरवं यदाऽभिनववयस्कोऽहं लन्दननगर्यां न्यवसम्। स च संसर्गो गच्छता कालेनोत्तरोत्तरमुदकृष्यत[1]। यत्राफ्रीकाभूखण्डेऽहमशरण्यजनमध्यगतोऽस्मीत्यपश्यं तत्रापि परःशतान् खिस्तीयान् मित्राण्यकरवम्।

यथैतेषां पुरातनसुहृदामेकतमस्मै प्रत्यश्रौषं तथावश्यकमजीगणं मया भरतवर्षभवानां खिस्तीयानां मूर्धन्यः श्रीकालिचरणो वन्द्योपाध्यायो द्रष्टव्य इति। अहं तमुपागममवोचं च तत्त्वं जिज्ञासुरहं त्वामुपसन्नः[2]। 'परमार्थालोकाय' सर्वात्मना यतिष्य इति यदहं केभ्यश्चित्प्रियतमेभ्यः सुहृद्भ्यः प्रत्यज्ञासि तदिदानीं चिकीर्षमाणस्त्वामुपसर्पामीति। अहं तमाख्यं विश्वासिता मया सुहृदो नहि कश्चिदर्थलाभो मामालोकाद्वारयिष्यति यदि परं तमुपलभेयेति। भवतु। नाहमल्पस्यावयोर्वादानुवादस्योपवर्णनया कालं क्षपयितुं समीहे। स सर्वः शोभन उदारश्चाभूत्। अहं प्रत्यावर्तिषि परं नाहमुद्विग्नो न च विषण्णो न वा मनोहतोऽभूवम्। श्रीकालिचरणोऽपि मां न प्रत्यायययदित्येवाशोचिषम्। अयं हि मेऽन्त्यः प्रेक्षापूर्वकं कृतः खिस्तीयो[3]पलब्ध्यर्थको यत्नः। अद्याहं खिस्तीये बहु प्रशस्यं पश्यामि परमहं खिस्तवेदाक्षरार्थानुसारिभिः खिस्तानुगैस्सारूप्यमधिगन्तुं न प्रभवामि। नन्त्रं निवेदये हिन्दुधर्मो यथाहमेतं वेद निरवशेषं मामन्तरात्मानं परितोषयति व्यश्नुते च। गीतासूपनिषत्सु च यां सान्त्वनां लभे नाहं तां पर्वतभवे खिस्तोपदेशेऽपि विन्दे। तत्र निर्दिष्टं परं पुमर्थं नाहं बहु मन्य इति न। तदङ्गभूतैः कैरप्यनुशासनैरवासितान्तःकरणोऽ-

१. उत्कर्षम् (वृद्धिमिति यावत्) आपद्यतेत्यर्थः।
२. उपेत इत्यर्थः। उपसेदुर्दशग्रीवम् इत्यत्र भट्टिकाव्ये यथा।
३. खिस्तेन प्रोक्तं खिस्तीयम्। तेन प्रोक्तमित्यस्मिन्नर्थे वृद्धाच्छः इति

स्मीत्यपि न। परमिदं मया भवतां पुरः प्रतिपत्तव्यं यदा सन्देहा मे मानसमाक्रामन्ति, आशाभङ्गश्च बद्धलक्ष्यं मां प्रेक्षते, लोकं च निरालोकं पश्यामि तदाहं गीताः समाश्रये शोकापहं श्लोकं च लभे। लब्धमात्रे च तस्मिञ्शोकसमाकुलोऽप्यहमेकपदे स्मेराननो भवामि। दुरन्तैर्वृत्तान्तैर्व्याप्तं मे जीवितम्। परं यदि तेषामत्र किमपि दृग्गोचरमलोप्यं च फलं न लक्षये भगवद्गीतानुशासनं तत्र कारणमिति।

ख्रिस्तीयप्रचारका यूयं संभिन्नबुद्धीनां प्रतिमोपासकानामनात्मज्ञानां चैषा भूरिति धियेमं भरतखण्डमुपपद्यध्वे। ख्रिस्तमतमार्मिकाणामुपदेष्टॄणामन्यतमः श्रीहेबर इदमावलिद्वयमलिखद्यत्स्मृतमात्रं ममारुंषि नित्यमतुदत्—यत्र सर्वो विशेषो रम्यः, मनुष्यश्च केवलो नीच इति। यदि स भवान्नेदमलेखिष्यत्साम्प्रतमभविष्यदिति मन्ये। सर्वं भारतं वर्षं सञ्चरतो मम त्वन्यादृश एवानुभवः। पक्षपातासंस्पृष्टेन चेतसाऽश्रान्तं तथ्यमन्वेषमाणोऽहमिमं देशं पर्यन्तादेकस्मादारभ्याऽपर्यन्तान्तरं बह्वभ्रमम्। परं भगवत्या भागीरथ्या लौहित्येन नदेन कलिन्दतनयया च प्रोक्षिते रुचिरेऽस्मिञ्जनपदे जनो नीच इति वक्तुं न पारये। नहि स नीचः। स तथैव तथ्यं मृगयते यथा यूयमहं वा। स मृगयतेतरामिति सुवचं स्यात्।......

यूयमेतद्देशजानां परितापकारणानामुपलम्भाय तदपनोदाय चेहोपेताः। संभावये चेहस्था यूयं वेद्यवेदनोन्मुखा इति। तेन यदि भरतभुवा किञ्चिदुपदेष्टव्यमस्ति नहि यूयं कर्णौ पिधास्यथ दृशौ वा संवरिष्यथ हृदयं वा कठिनीकरिष्यथ, अपि तूभौ विवरिष्यथ हृदयं च विशिष्य समुत्तानयिष्यथ येन यदिहोपादेयं स्यात्सर्वं तदुपादीयेत। प्रत्याययामि वो भारते वर्षे ऽनल्पमुपादेयमस्तीति।......

द्व्यशीत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे ज्येष्ठे मासि भुवि कीर्तिशेषं गतवति श्रीचित्तरञ्जनदासे श्रीगान्धी तत्स्मारकमुद्दिश्य

---

च्छः। वा नामधेयस्य इति वैकल्पिकयत्र वृद्धसंज्ञा।

जनताया धनं समाहर्तुं प्रारभत। तदर्थं च बहून्प्रदेशान् व्यचरत्। तत्र कृती सन् स्वस्याभिमतस्य कार्यत्रितयस्य सिद्ध्यै ग्रामान् नगराणि च पुनः पर्यटत्। कर्तनचक्रं मे कामधेनुरिति च यत्र तत्राख्यत्। जाताध्वखेदो विश्रमसव्यपेक्षो महात्मा पौषे मासि कर्णपुरभवेऽखिल-भरतवर्षीयकाङ्ग्रेसपरिषदः संमिलने संनिहितैर्हितैः प्रेक्षावद्भि[1]र्जनैः प्रार्थितो बोधितश्च वत्सरमेकं पर्यटनमुपारमत्। अग्रिमां सर्वां समाम-मदावाद इत्यतो बहिर्नागमत्। आश्रमभूतये चाविरतं प्रायसत्[2]।

आषाढे कृष्णाष्टम्यां गुर्जरमहाविद्यालयच्छात्रान्सम्बोध्य यच्छ्री-गान्धी स्माह तन्महात्मनो विचारसरणीं तदानीन्तनीं देशावस्थितिं च सम्यग् व्यनक्तीतीह समासतो विन्यस्यते—

अहो कियता भिन्ने सप्तसप्तत्युत्तरनवदशशतमितवत्सरभवा द्व्यशीत्युत्तरनवदशशतमितवत्सरभवा चास्मद्देशावस्थिती। अहं शोककरीं वार्तामाचिख्यास इति न तर्कणीयम्। न वयं प्रतीपं गच्छामः। न नो देशः प्रतीपं गतः। नेदमारेकणीयं[3] वयं पञ्चभिर्वर्षैः स्वराज्यस्य नेदीयांसः संवृत्ता इति। यदि कश्चिद् ब्रवीति सप्तसप्तत्युत्तरनवदशशततमे वत्सरे स्वराज्यं हस्तगतप्रायमासीत्, अद्य तु दूरे वर्तते—न ज्ञायते कियति दूर इति— तन्नैव प्रत्येतव्यम्। दैवतं प्रार्थ्यं सदाशयेन कृतो यत्नो न कदाचिद् बन्ध्यो भवति। एतादृशो यत्न एव पुरुषस्य सिद्धार्थता। फलं पुनर्विधातर्य्यायतते।

बहुसंख्यत्वं त्रस्नूनामेव[4] परितोषाय भवति। उदारसत्त्वानान्त्व-

---

१. प्रेक्षा बुद्धिः तद्वन्तः प्रेक्षावन्तो बुद्धिमन्तः, तैः। प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः—इति बुद्धिनामस्वमरः।

२. यसु प्रयत्ने इति दैवादिकाल्लुङि रूपम्। पुषादित्वाच्च्लेरङ्। आ गणान्तात् पुषादय इति सिद्धान्तः।

३. आरेकणीयमाशङ्कनीयम्। रेकृ शङ्कायाम् इति भौवादिक आत्मनेपदी धातुः।

४. त्रसनशीलानामित्यर्थः। त्रसिगृधिधृषिक्षिपेः क्नुः।

सहाये सम्पराये ऽभिमानः । तत्सत्त्वौदार्यानुशीलनेनेह[1] यूयमवतिष्ठध्वे यूयमेको वा बह्वो वा स्यात सत्त्वौदार्यमेव वास्तवं वीर्यम् । वीर्यान्तरं चासत् । सत्त्वौदार्यं चोत्सर्गादध्यवसायाच्छ्रद्धाया आर्जवाच्चर्ते दुरापमिति ।

त्र्यशीत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे पौषे मासि कृष्णप्रथमायां महात्मा काङ्ग्रेसोपवेशने संनिधातु यथाप्रतिज्ञमाश्रमात् कामरूपेषु गुहाटीत्याख्यं नगरं[2] प्रातिष्ठत । विविक्तवासश्च परिणतिमभजत ।

इतः पूर्वं काङ्ग्रेसपरिषदि पक्षद्वयं चिरमाविरासीत् । एको राजकार्यविरुरुत्सया स्वराज्यार्थोपचिकीर्षया च व्यवस्थापिकाः सभाः प्रविविक्षूणां पक्षः, अपरश्चासहकारितायां निश्चितमतीनां तास्तित्यक्षूणाम् । अयं मतभेदः कालेन वैमनस्येन पर्यणमत । वैमनस्येन च क्रमेणातिभूमिं गतम् । अनेन भैरवेण वैरानुबन्धेन काङ्ग्रेसपरिषदन्तर्भिन्ना बहुशाखत्वं गता विशरारुतां[3] चापन्ना सर्वस्माद्गौरवाद्भ्रास्यतेऽनिष्टं च महत्प्रसङ्क्ष्यत इत्यालोच्य महात्मा विरोधिनो द्वयान्संधातुं सर्वात्मना प्रायतत । सिद्धिं चालभत । इदं हि तत्रभवानुपन्यास्थत्—

व्यवस्थापिकानां सभानां परित्याग इति योऽयं काङ्ग्रेसावसायः सोऽवस्थास्यते परं ये ऽन्तःकरणप्रवृत्तिप्रामाण्यात् स्वेन धर्मेणानुशिष्टा वा तत्प्रवेशं सार्थकं पश्यन्ति ते वरणकर्मणि प्रवर्तितुमभ्यनुज्ञायन्त इति ।

अयमुपन्यासः सर्वैरङ्गीकृतः । विरोधश्च शान्तः । अनर्थश्च वारितः ।

---

१. हेतौ तृतीया । हेतौ इत्यस्मिन्सूत्रे फलमपीह हेतुरित्युक्त्वा अध्ययनेन वसति इत्युदाजहार दीक्षितः ।

२. अत्र प्रस्थानक्रियाया अकर्मकत्वेऽपि तदङ्गभूतोद्देशक्रियापेक्षया सकर्मकत्वम् ।

३. विशीर्यंत इत्येवंशीलो विशरारुः । तस्य भावः विशरारुता । शिरः कम्पविशीर्यमाणबन्धविशरारोर्जटाकलापस्य इति श्रीहर्षचरिते ।

एतदनुषङ्गेणायमपर उपन्यासः श्रीगान्धिना समुपस्थापितः—वरणादौ तस्यैव काङ्ग्रेसपारिषद्यस्य संमतिदानेऽधिकारो वर्तिष्यते यो यथाभ्यासं स्वदेशीयं खद्दराख्यं वासो वस्त इति। इदं च सामाजिकाः संबोध्योक्ताः—इदं नियमशोधनमात्मनः परिशोधने साधनं मतम्। यदि भवन्तो मन्यन्ते परिशुद्धस्यास्य नियमस्यातिवृत्तिरेवानुवृत्तिरिति, यदि चेहैनं स्वीकृत्य काङ्ग्रेसमण्डपाच्च निर्गत्यातिक्रमितुमिच्छन्ति तर्हि विज्ञापये निराक्रियतामेष इति। वर्तमानो नियमोऽत्यन्तं मानहरः। अयमपनेयो वा मूलतः परिशोध्यो वा। खद्दराख्येन वाससा स्वावष्टम्भेन भवितव्यम्। यदीममुपन्यासं स्वीचिकीर्षन्ति भवन्तस्तर्हि प्रार्थये मया कीर्तितपूर्वं सर्वमनुषङ्ग[1] बुद्ध्वैव स्वीकुर्वन्त्विति।......नाहमनुग्रहमपेक्षे यतो नाहमनुगृह्णामि। यतोऽहं स्वातन्त्र्यप्रियः, अतो नाहं कस्यचित्स्वातन्त्र्यं परिच्छेत्तुं[2] किमपि कर्तुं कामः। अहं ह्यात्मनः प्रसत्तये[3] यते स हि मे परो देव इति।

गुहाटीतः प्रतिनिवृत्तो महात्मा विहारदेशे खद्दराख्यं वासः समुद्दिश्य धनराशीन्समाहर्तुं तद् विक्रेतुं च पर्यटनमारभत। निर्णेजकास्तन्तुवापाश्चोच्चैःपदस्था अनुच्चैःपदस्थाश्च, आढ्या अनाढ्याश्च स्वशक्तिमनतिक्रम्य धनं व्यश्राणयन्[4]। एवं पर्यटन् गलितार्धे माघे मासि स विहारविद्यापीठविद्यार्थिनः सम्बोध्यार्थगुर्वीमिमां गिरमगादीत्—

यदाहं राजकीयविद्याशालाः परित्यक्तवतां छात्राणामुपाध्यायानां च संख्यामनुध्यायमि नाहमीषदप्यनुतप्ये। न चाहमनुशये[5] तेषां बहवः

१. पूर्वपरयोः कर्मणोः सम्बन्धोऽनुषङ्गः।
२. परिच्छिन्नं मर्यादितं कर्तुमित्यर्थः।
३. प्रसादायेत्यर्थः। प्रसाद इह परितोषः। प्रसत्तये गोत्रभिदस्तपांसि इति किरातार्जुनीये।
४. व्यतरन्नित्यर्थः। श्रण दाने चुरादिः। प्रायेणायं विपूर्वः। निःशेषविश्राणितकोषजातम् इति रघौ।
५. अनुपूर्वात् शीङ् स्वप्ने इत्यस्माल्लट्। अनुशयो मे नास्तीत्यर्थः। अथा-

परावृत्ताः, बहवश्चासन्तुष्टा अनिर्वृताश्चेति। तेषु सदयोऽस्मीति शोचामि। परमनुशोकोऽनुशयो वा मे नास्ति। इमे क्लेशा विषादाश्च प्रत्यहं न उपनमन्ति[1] प्रत्यहं च तैरुपनन्तव्यम्। यदि सत्यानुवृत्तिः प्रवालशय्याशयनमिव स्यात्, यदि सत्ये स्थितिरसहित्वा क्लेशं साध्येताव्यवहितश्च सुखनिर्वेशः[2] स्यात्तदास्य जगतो रामणीयकं न स्यात्। अस्माभिः सत्ये संलग्नैर्भाव्यं द्यौरपि पतेच्चेत्। नायं गरीयानर्थः सत्यं चेदनुवर्तमाना वयं सहैव भरतवर्षेण सर्वां जगतीं हारयेमेति। वयं तत्त्वतः सत्योपासका भविष्यामो यदि वयं विततेऽस्मिन् परमात्मनः प्रशासने[3] भरतवर्षसहितान्सर्वान्नोऽभीष्टानर्थानाप्स्याम इति श्रद्दधाना आ मृत्योः सत्यमनुवर्तेमहीति।

विहारपर्यटनं परिसमापय्य श्रीगान्धी महाराष्ट्रीवाग्व्यवहारेषु मध्यदेशेषु विदर्भेषु च पर्यटनमारब्ध। अकोला इत्यत्र गतो महात्माऽस्पृश्यतामधिकृत्येत्यवादीत् —

मदीया अस्पृश्यताविषया विचारा नाङ्ग्लशिक्षानिबन्धनाः। एतानहं प्रागाङ्ग्लदेशगमनात् प्राक् च शास्त्राध्ययनात् तदननुगुणायां चावस्थायां व्यवास्थापयम्। अहं हि शास्त्राक्षरार्थानुसारिणि वैष्णवान्ववाये[4] जातः। यदाऽहं प्राप्तव्यवहारः समजनिषि तदा प्रभृत्येव विनिश्चिता इमे मे विचाराः सन्ति। एते चोत्तरकालभवेन मतान्तरापेक्षया हिन्दुशास्त्राध्ययनेनानुभवेन च केवलमुपोद्बलिता इति।

विदर्भेभ्यो विनिवृत्तः श्रीगान्धी महाराष्ट्रदेशे विचरितुमुपाक्रमत। धूलिया इत्यत्र वणिज इतरैरसंभूयाभिनन्दनपत्रप्रदेशननिर्बन्धपरा

---

नुशयो दीर्घद्वेषानुतापयोः—इत्यमरः।

१. प्राप्नुवन्तीत्यर्थः। कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा इति मेघदूते।

२. निर्वेशो भोगः। निर्वेशो भृतिभोगयोः—इत्यमरः। क्रीडारसं निर्विशतीव बाल्ये इति कुमारे।

३. राज्य इत्यर्थः। एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः इति बृहदारण्यकोपनिषदि।

४. भागवतानां वंशे इत्यर्थः। वंशोऽन्ववायः सन्तानः—इत्यमरः।

अभूवन् । स्वसकाशादेव च केवलाद्धनवितरणं निरचिन्वन् । श्रीगान्धी नो ज्ञातिरिति चार्थं पत्रे न्यबध्नन् । वाचितेऽभिनन्दनपत्रे महात्मना यदवाचि तद् द्योतयति न तत्रभवतो लोकप्रियता मनीषिता, न जनःरञ्जनमभिप्रेतं, न च विद्विषो दरः[1] । न ह्यस्य कश्चिन्निजः कश्चिद्वा परः । एवं हि स भवानवादीत्—

यदहं जलपैगुरी इत्यत्र द्व्यशीत्युत्तरनवशतोत्तरसहस्रतमे वत्सरेऽवादिषं तदिहानुवदामि—ब्राह्मणो वा राजन्या वा शूद्रा वा भरतवर्षं नाहारयन् । विश एवाहारयन् । विश एव च तत्प्रतिलाभे प्रभव इति। भरतवर्षेतिहासे ते वणिजः प्राचुर्येण निर्दशिताः सन्ति य आङ्गलमापणिकं[2] तथोपाकुर्वन्नभजंश्च यथा भरतवर्षमपकृतमभूत् । ये विपणिर्नो व्यापारार्थमिहागमंस्ते व्यापाररक्षायै क्षत्रियवदाचरन् व्यापारश्रितराज्यकार्यनिर्वाहाय च ब्राह्मणवदाचरन् । नायं नो वर्णधर्मो वणिजा क्षत्रियवन्नाचरणीयं मातुः स्वसुर्वा चारित्रं परिरक्षितुं न योद्धव्यमिति । न चायं नियमः स ब्राह्मणवद्विद्यां नोपाददीत । शूद्रवद्वा न शुश्रूषेतेति । आङ्गलो हि सर्वैश्चातुर्वर्णिकैर्गुणैर्मण्डितः । तस्याद्भुतकर्मणा विस्मापिता वयं स्वधर्मं व्यस्मराम । वयं कापुरुषत्वमगच्छाम । व्यस्मराम च विशः स्वभावजं कर्म कृषिः पाशुपाल्यं वाणिज्यं चेति । तेन च स्वदेशशत्रवोऽभूम । भवन्तः परमार्थवणिक्त्वप्रतिलाभेन देशे सर्वस्य व्यापारस्य स्वायत्तीकरणेन चेमां दुःस्थितिं समाधातुमर्हन्ति । अस्माकमसितानि शिरस्त्राणानि यन्त्रनिर्मितानि च स्नानीय[3]वस्त्राणि, कुलाङ्गनानामंशुकशाटिकाश्च नो ह्रीपदं

१. दरो भयम् । दरोऽस्त्री साध्वसे गर्ते कन्दरे तु दरी स्मृता । दराव्ययं मनागर्थे—इति मेदिनीकरः ।

२. पण्याजीवी ह्यापणिकः क्रयविक्रयिकश्च सः—इत्यमरः । आपणो व्यवहारोऽस्यास्तीति आपणिकः । अतः इनिठनौ ।

३. स्नात्यनेनेति स्नानीयम् । कृत्यल्युटो बहुलम् इति बहुत्वोक्त्याऽत्र करणेऽनीयर् ।

दासत्वलिङ्गं चेति ।

नित्यं पर्यटतोऽनारतं च श्राम्यतः श्रीगान्धिनः कायो वैकल्यमापत् । अतः स मासद्वयं व्यश्रमत् । ततो मसूरदेशे पर्यटितुमारब्ध । चतुरशीत्युत्तरनवशतोत्तरसहस्रतमे संवत्सरे भाद्रे मासि शुक्लसप्तम्यां स मद्रापुरीमध्यगमत् । चतुरहोवासेन च सप्तदश समाजान् संबोध्य सविस्तरं धर्ममन्वशात् । मद्रासदेशे नगरान्तराणि भ्राम्यन् कार्यत्रितयं च व्याचक्षाणो महात्मा कदाचित् केरलदेशं गतः ।

कार्तिके मासि श्रीगान्धी सिंहलद्वीपमगच्छत् । तत्र कोलाम्बुरित्यादिनगरेषु महतो जनसमवायान्सम्बोध्य धर्मसंहितानि वचांस्यवोचत् । तत्रत्या नरा नार्यश्च महात्मानं देवतामिवाभ्यपूजयन् । एकतमस्मिन्स्थाने कश्चिदप्राक्षीत्—किं कस्तूरबाई इति श्रीगान्धिनः सवित्र्या[1] नाम । सविनोदं सहर्षं च महात्मा प्रत्यवादीत्—आं सा मे सवित्रीति । अपरेद्युः कल्ये महात्मानं शुश्रूषवः संनिपतिता जनास्तामसंनिहितामुपलभ्याप्राक्षुः—कुतो माता नायासीदिति । श्रीगान्धीत्थं प्रत्यभाषिष्ट—अतीतायां निशि कश्चित्सुजनः सा मे मातेति तामन्यथागृह्णात् । मम च तस्याश्च न केवलं मर्षणीयोऽयं प्रमादोऽपि त्वभिनन्दनीयः । अद्य बहवो वत्सरा अन्योन्यानुमत्याऽऽवयोर्दाम्पत्यस्य व्यपेतस्य । अद्य चत्वारिंशद्वत्सरा अनाथतां गतस्य मम । त्रिंशत्प्रायांश्चाब्दान्सा मे मातृस्थानीयाभूत् । सा मे माता रुग्णपालिका सूपकारी पात्रसम्मार्जनकरी अन्यद्वा सर्वम् । यदि सा प्रत्युषसि संभावनां संविभजितुं मया सहैवागमिष्यन्न मे भोजनमुपाकल्पयिष्यत न वा मे वासांस्यवैक्षिष्यन्त न च शरीरसुखोपकरणान्यादरिष्यन्तेति ।

सहस्ये मास्यखिलभरतवर्षीयकाङ्ग्रेसपरिषन्मद्रापुर्यां मिलिता । तत्र पूर्णस्वातन्त्र्यप्राप्तिः काङ्ग्रेसोद्देशः स्थिरीक्रियतामिति प्रस्तुतं स्वीकृतं चाभूत् ।

---

१. जनन्या इत्यर्थः । स्वरतिसूतिसूयतिधूञ्दितो वा इतीडागमः । तथा च प्रयोगः—तथा दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकाशे इति कुमारे ।

 


आगामिनि वत्सरे नेहरुवंशललामभूतेन श्रीमोतिलालेनाधिष्ठितैका समितिर्नेहरुविवरणाख्यं स्वराज्यपद्धतिग्रन्थं व्यररचत्। तत्र हि ब्रिटिशसाम्राज्येऽन्तः स्वराज्याधिगमो भरतवर्षोद्देशः प्रदिष्टः। इममुद्देशं कलिकातायां मिलितः सर्वपक्ष्यसमाजोऽन्वमोदत। परं सर्वमहता[1] काङ्ग्रेसाख्येन राष्ट्रियसमाजेन तस्योद्देशस्य स्वीकृतिरावश्यकीति बहवः प्रत्यपद्यन्त।

अयं ह्युद्देशः स्वीकृतपूर्वमुद्देशं व्यरुणत्। अतो यदा पञ्चाशीत्युत्तरनवशतोत्तरसहस्रतमे वत्सरे पौषे मास्यखिलभरतवर्षीयकाङ्ग्रेसपरिषत्कलिकातायां मिलिता तदा मतविरोधेनान्तर्भेदः संजनिष्यत इत्याशङ्क्यत। स्थेमरुचयः काङ्ग्रेसोद्देशपक्षपातिनः स्वोद्देशहानं नारोचयन् परं नेहरुविवरणस्य विरचयितारस्तदनुग्राहकाः काङ्ग्रेसपरिषद्यन्तर्भूता अनन्तर्भूताश्च नयकोविदा ऐच्छन् साम्राज्येऽन्तः स्वराज्यमिति भरतवर्षस्यैकोभियोग ऐकमत्येन निश्चीयतामिति। यदा काङ्ग्रेसपरिषदि नेहरुविवरणविचारः प्रास्तूयत तदा वक्तॄणां वादानुवादः सोत्साहं चिरमभूत्। एकतो विवरणकृच्छ्रीमोतिलालः साम्राज्येऽन्तः स्वराज्यप्राप्तिरुद्देशोऽङ्गीकार्यं इति पक्षमपुषत्। अपरतस्तदात्मजः श्रीज्वाहरलालो महाभागः पित्रा प्रतिपादितेऽर्थे[2] बलवत्प्रत्यवास्थित[3], निर्धारितपूर्वाच्चोद्देशाद्रेखामात्रमपि विचलितुं नान्वमंस्त। पण्डितः श्रीमदनमोहनो मालवीयः श्रीनिवासोऽय्यङ्गरश्च बहु व्यवदिषाताम्[4]। ऊर्जिताश्चयैः श्रीसेनगुप्तस्य श्रीसुभाषचन्द्रस्य च भाषितैरुत्तेजिता युवानः पूर्णस्वातन्त्र्यमिति शब्दमसकृदुच्चैरुदैरयन्। एवमुपस्थितायां संकटवेलायां नेहरुविवरणं दूषयिष्यत इति जातायामाशङ्कायां महात्मनः प्राप्तावसरेण प्रस्तावेन तत्तेजोमहिम्ना च सर्वे वैमत्यं

१. सर्वेषां महत्तरः तेन। गुणात्तरेण तरलोपश्च इति वार्तिकेन समासः तरलोपश्च।
२. बोधिते इत्यर्थः। प्रतिपत्तिर्बोधः।
३. विरोधेनातिष्ठदित्यर्थः। व्यरुणद् इति यावत्।
४. भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः इति विमतावर्थे तङ्।

विहायैकमतयोऽभवन् । इदं हि तत्रभवान् प्रास्तावीत् -

यदि ब्रिटिनराजमन्त्रिण एकोनत्रिंशदुत्तरनवशतोत्तरसहस्रतमे ख्रिस्ताब्दे दिशाम्बरे मास्येकत्रिंशं दिवसं यावन्नो भरतवर्षीयेभ्यः साम्राज्येऽन्तः स्वराज्यं न वितरिष्यन्ति तर्हि काङ्ग्रेसपरिषत्पूर्ण-स्वराज्यप्राप्तिलक्षणमुद्देशमुद्घोषयिष्यतीति ।

एतं प्रस्तावं विवृण्वानो महात्मा सविस्तरमवादीत्, लोकोत्तरया च वाचोयुक्त्या स्वपक्षयाथार्थ्यमुद्दिश्य सर्वान् सभ्यान् प्रत्याययत् । यदि ब्रिटिनराजमन्त्रिणोऽस्माकमिममभियोगं नाभ्युपैष्यन्ति तदाहं त्रिंशदुत्तरनवशतोत्तरसहस्रतमेऽब्दे जनवरीमासि प्रथमेऽहर्मुखे स्वतन्त्रो जागरिष्यामीति च वाचमुपसंहरन्प्रत्यजानीत ।

इत्थं विवृतः प्रस्तावो बहुसंमत्या स्वीकृतः ।प्रभूतेन च महात्मनः प्रभावेण जितम् ।

षडशीत्युत्तरनवशतोत्तरसहस्रतमे विक्रमवत्सर आश्विने

**लन्दनपुर्यां मन्त्रण-समाजः**

मास्याङ्गलदेशात्प्रत्यावृत्तो लार्डार्विन्महोदय उदघोषयत् त्रिसप्तत्युत्तरनवशतोत्तरसहस्र-तमे वत्सरे राजाधिराजेन क्रमिकेण शक्ति-संक्रमेण कालेन भरतवर्षीयाः स्वराज्यभाजो भविष्यन्तीति यत्प्रतिज्ञातं प्रख्यापितं च तदनुरोधतः प्राप्तावसरं शक्तिसङ्क्रमं विचारयितुं भरतवर्षप्रतिनिधीनां ब्रिटिशराजमन्त्रिणां च मन्त्रणसमाजो [1]नचिराल्लन्दनपुर्यां संमेलिष्यतीति ।

श्रीगान्धी नीतिनिष्णाता इतरे काङ्ग्रेसपारिषद्याश्चेमां घोषणा-मन्वमोदन्त परं व्यंसिता मा भूमेति ते प्रत्ययवचनमपैक्षन्त स्वराज्य-मूलकशासनपद्धतेर्निर्माणमेव मन्त्रणसमाजस्यार्थो भविष्यतीति । अतः

---

१. सुप्सुपा समासः । नात्र नञ् । नेत्यव्ययस्य सुबन्तप्रतिरूपकेण चिराद् इत्यव्ययेन सह समासः ।

पौषे मासि कृष्णाष्टम्यां श्रीगान्धिपुरोगमा जननायका राजप्रतिनिधिना सममन्त्रयन्त निरुक्तं प्रत्ययवचनं चापेक्षन्त । अविन्महाभागस्तस्मिन्प्रत्ययवचने तं तं प्रत्यूहं व्याकरोत् परमिदं स्पष्टमभ्यदधाद् मन्त्रणसमाजे यत्र विषये भूयःसाम्मत्यं भविष्यति स मन्त्रिसभयोपष्टब्धः प्रतिनिधिसभायां तत्स्वीकृतिलाभायोपस्थापयिष्यत इति ।

नेतृणां राजप्रतिनिधिना सहेदं मन्त्रणं होरात्रयमभूत् ॥

इत्युपाध्यायश्रीचारुदेवशास्त्रिणः कृतौ श्रीगान्धिचरिते
पञ्चमः परिच्छेदः ॥

# अथ षष्ठः परिच्छेदः

पूर्णस्वराज्यप्रस्ताव-स्वीकृतिः

अखिलभरतवर्षीया काङ्ग्रेसपरिषद् एकोनत्रिंशदुत्तरनवशतोत्तरसहस्रमिते खिस्ताब्देऽन्त्ये मास्यन्त्येषु दिवसेषु पञ्चापराजधान्यां लवपुरे मिलिता । यतः श्रीगान्धिनो राजप्रतिनिधिनाऽर्विन्महोदयेन सह संवृत्ताभिः संकथाभिरिदमस्फुटद् भविष्यति साम्राज्यप्रतिनिधीनां भरतविषयवासिनां नीतिवित्प्रमुखाणां च मन्त्रणसमाजे भारतं वर्षं साम्राज्येऽन्तः स्वराज्यभाक्त्वं नाप्स्यतीति, अतः कलिकाताकाङ्ग्रेसोपन्यासानुरूप्याय स्वसंविदविसंवादाय च महात्मा पूर्णस्वराज्यावाप्तिः काङ्ग्रेसोद्देशः स्थिरीक्रियतामिति प्रास्तावीत्, तत्समर्थनायां च भूयांस्युपपत्तिमन्ति वाक्यान्यगादीत् । एकत्रिंशेऽह्न्यानिशीथं परःसहस्राः समवेता जना अजागरुः । अनेके वक्तारः प्रस्तावस्यानुग्राहिकास्तद्विरोधिनीर्वा युक्तीरवादिषुः । ततः पक्षद्वयस्यानुकूलानां संमतीनां संख्यानमारभ्यत । यावदेव द्वादशनादमिता क्षणदात्यगाद् आगाच्च नवो वत्सरस्तावदेव निरवर्तत संख्यानं पूर्णस्वराज्यप्रस्तावश्चोररीकृत इति प्राख्याप्यत । ततोऽनन्तरमानन्दपरवशाः स्वेच्छासेवका ध्वजदण्डं परितः समवायन् स्वातन्त्र्यपताकां चोदश्राययन्[1] । तेन च सर्वस्य कर्मकलापस्य सरसतामापादयन् ।

यथायं प्रस्ताव आ पांसुलपादहालिकात् सर्वस्य जनस्य विदितः स्याद्यथा च सर्वे साम्प्रतिकीं देशावस्थितिं सम्यक् परिचिनुयुस्तथा विधेयमिति परिभावयन्ती[2] कार्यनिष्पादिका सभा माघे कृष्णद्वादशी पूर्णस्वराज्यदिवस इति सर्वत्र भारते वर्ष उत्सवेनाभिनन्दनीयेति

१. उच्छ्रितामकुर्वन्नित्यर्थः । वरोन्नत्योः समुच्छ्रयः—इति रभसः ।
२. भुवोऽवकल्कने इत्यस्मा च्चौरादिकाच्छतृप्रत्ययः । तत्रावकल्कनं चिन्तनम् ।

निरचिनोत्, व्यादिशच्च प्रदेशकाङ्ग्रेसपरिषदोऽत्राह्नि समानीतो जनसमाजो वक्ष्यमाण उपन्यासः प्रदेशभाषयाऽनूद्य श्राव्यतां, स च हस्तोद्यमनेन स्वसांमत्यं व्यञ्ज्यादिति प्रार्थ्यतामिति।

अयमस्त्युपन्यासग्रन्थः—

वयं विश्वसिमो यथा देशान्तरवासिनां तथा भरतविषया[1]-धिवासिनामयमनन्यहार्योऽधिकारो यत्स्वातन्त्र्यावाप्तिः स्वपरिश्रम-फलप्रतिभोगोऽन्नोदकाधिगमश्च, यथा ते ससाधनाः सन्तः स्ववृद्धयेऽलं स्युरिति। इदं च विश्वसिमो यदि काचिच्छासनपद्धतिर्लोकानेभि-रधिकारैर्विना करोति तर्हि लोका एतां विपरिणमयितुमपनेतुं वार्हन्तीति। भरतवर्षीया न केवलं स्वाधीनतया विनाकृता अपि तु तेषां धनं विद्याऽध्यात्मशक्तिश्च परार्थमेव विनियुक्तानि। अतो विश्वसिमो भरतवर्षेणावश्यं पूर्णस्वराज्यमधिगन्तव्यमिति।

उत्सादितो भरतवर्षस्यार्थः। यो ह्यस्मल्लोकेभ्यः कर आदीयते स आस्माकस्याऽऽगम[2]स्यात्यन्तमननुरूपः। सामान्यतो न प्रत्येकं सप्त पणा अह्निक आयः। यान् गुरून् भागधेयान्[3] दद्मस्तेषां विंशत्युत्तरं शतं कृषीवलेभ्यः क्षेत्रकर इति गृह्यन्ते। त्र्युत्तरं च लवणकरः। स हि दरिद्रान् बलवद्बाधते।

कर्तनादयो ग्रामव्यवसायाः समुच्छिन्नाः। तेन कृषका वत्सरे चतुरवरान् मासान् व्यापारं न लभन्ते लभन्ते च धियो जाड्यं हस्त-क्रियाराहित्यात्। देशान्तर इव नात्र विनाशितानां शिल्पानां स्थाने

१ विषयो देशः।
विषयो गोचरे देशे तथा जनपदेऽपि च।
प्रबन्धाद्यस्य यो ज्ञातस्तत्र रूपादिके पुमान्॥ इति मेदिनी।

२. आगम आयः। आगमप्राधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति इति स्वप्ननाटके।

३. करानित्यर्थः। भागधेयः करो बलिः—इत्यमरः। करवाची भागधेयशब्दः पुमान् दैववाची नपुंसकम् इति विवेकः।

किमप्युपकल्पितम् ।

शुल्कं प्रचलितमुद्रा च तथा चाल्येते यथा कृषकैरतिरिक्तो भरो वोढव्यो भवति । विदेशीयपण्यानां बंहिष्ठोंऽ[1]श आङ्गलदेशात् समागच्छति । शुल्कं चाङ्गलं शिल्पनिर्मितं वस्तुजातमनुगृह्णाति । ततो भागधेय इति समासादितोऽर्थो न जनताभारलघूकरणे विनियुज्यतेऽपि त्वत्यर्थमतिव्ययसाध्यशासनप्रवर्तने । स्वेच्छया प्रवर्तितेन विनिमयप्रमाणेन च कोटिशो रूप्यका इतो देशापदपवाहिताः ।

भरतभूमिजानां राजनीतिनिष्ठा प्रतिष्ठा यथाङ्गलेषु शासत्सु ह्रसिता न तथा पूर्वं कदाचन । यैः कैरपि संशोधनैर्लोकेभ्यः परमार्थतो राज्यनिर्वाहाधिकारा नादिषत । अस्मासु मध्ये महामहिमभिरपि जनैरनुयोगाधीनेष्वधिकृतेष्ववश्यं वैतसी[2] वृत्तिराश्रयणीया भवति[2] । अनियन्त्रणाभिप्रायकथनाधिकारेणाऽनियन्त्रणसमागमाधिकारेण च वयं वियुक्ताः । अनेके चैतद्देशजा निर्वासिताः प्रवसन्ति स्वगृहं प्रत्यावर्तितुं च न प्रभवन्ति । सर्वः शासनोपयोगी बुद्धिविभवो विनष्टः । अवशा च जनता क्षुद्रैर्ग्रामाधिकारैः कायस्थकर्मभिश्च तुष्यति ।

अनुशासनसरण्या वयं निरालम्बाः कृताः । अस्माकं विनयेन[3] च वयमिदानीन्तन्या नोऽवस्थित्या[4] परितोषिताः । इयं व्युत्पत्तिविषयिका नः क्षतिः ।

ब्लान्तिःशस्त्रीकरणमस्मान् क्लैब्यमजीगमत् । राज्याभावद्योतिकाया अनीकिन्याः सान्निध्येनेयं नो मतिर्जनिता वयमात्मानमवे-

---

१ बहुलशब्दस्य इष्ठनि रूपम् ।

२. आत्माऽवनमयितव्यो भवतीत्यर्थः । यथा वेतसः स्रोतोजवादवनमनेनात्मानं परित्रायते तद्वत् इत्यर्थः ।

३. आचारः शिक्षा । कर्तरि तृतीया ।

४. करणे तृतीया । एवमादिषु करणत्वं हि विवक्षन्ति शिष्टा न तु कारकान्तरम् । तथा च प्रयोगः—रत्नैर्महार्हैस्तुतुषुर्न देवाः इति ।

क्षितुं वैदेशिकादवस्कन्दाद्वा[1] गोपायितुं स्तेनेभ्यो लुण्टाकेभ्यो[2] जाल्मेभ्यश्च स्वगृहाणि रक्षितुं वा न क्षमामह इति। इयमाध्यात्मिकी नो विनष्टिः।

चतुर्विधस्य निरुक्तस्यानर्थस्यापादयितुर्वस्तुक्रमस्य याऽनुवृत्तिस्तद्दे-वेषु मर्त्येषु चाग इति दृढं मन्यामहे। परमिदमभ्युपेमः स्वातन्त्र्यावाप्तेः साधकतमं करणं प्रमाथो नेति। अतो वयं वर्तमानेन राज्यतन्त्रेण सर्वं कामतः प्रवृत्तं संसर्गं यावच्छक्यं परिहृत्यात्मानं संनत्स्यामहे। संनत्स्यामहे च निःप्रमाथाय शासनातिक्रमाय कराप्रदानाय च। वयं प्रतीमो यदि वयं सत्यामप्युत्तेजनायां प्रमाथमनास्थाय यादृच्छिकं साहायकमेव संहर्तुं शक्यामहे[3] करप्रदानं च विरमयितुं ध्रुवं नश्चारितार्थ्यमिति। अतो वयमिह दृढं प्रतिजानीमहेऽन्तराऽन्तरा काङ्ग्रेसेन करिष्यमाणान्पूर्णस्वराज्यावाप्तिहितान्निदेशान्वयमनु-विधास्याम इति।

काङ्ग्रेसनिदेश[4]वर्तिनः कोटिशो जना नियतेऽहनि नगरेषु निगमेषु ग्रामेषु च निर्दिष्टेषु प्रदेशेषु संनिपतिताः। सर्वत्रास्मिन्देशे प्रादोषिक्यां पञ्चनादमितायां वेलायामयमुपन्यासो वाचयितुमारभ्यत। समुदितो जनव्रातः परमादरेण सर्वमाकर्णयत् सांमत्यं च प्राकाशयत्। सर्वत्र चन्द्रशालासु[5] स्वातन्त्र्यपताका उद्धूयन्त। रथ्यासु[6] निषद्यासु[7] हर्म्येषु कुटीरेषु च सर्वत्र दीपोत्सवोऽक्रियत।

---

१. अवस्कन्द आक्रमः। पुरीमवस्कन्द लुनीहि नन्दनम् इत्यत्र यथा।
२. अपहारकेभ्यः। जल्पभिक्षकुट्टलुण्टवृङः षाकन् इति ताच्छीलिकः षाकन्।
३. शक विभाषितो मर्षणे इति दैवादिकाद्धातोर्लटि रूपम्।
४. निदेश आज्ञा। अववादस्तु निर्देशो निदेशः शासनं च सः—इत्यमरः।
५. चन्द्रशाला शिरोगृहम् इति कोषः।
६. प्रतोलीषु। सविधनगरीरथ्यया पर्यटन्तम् इति मालतीमाधवे।
७. आपणेषु। आपणस्तु निषद्यायाम्—इत्यमरः। संज्ञायां समजनिषद इति क्यप्।

अतो दिवसात् प्राचीने सप्ताहे सुराष्ट्रविद्यापीठस्नातकान्संबोध्य यच्छ्रीगान्धी स्माह तत्स्वातन्त्र्यप्रस्तावं विस्तरेण विशदयतीति संक्षिप्येहोपन्यस्यते । तद्यथा—

स्थाने भवन्तो मयि संभावयिष्यन्त्यहं लवपुरे काङ्ग्रेसोपवेशने स्वीकृतिं स्वातन्त्र्यप्रस्तावमन्तरेण[1] सत्याग्रहं च विशेषतः किमपि वक्ष्यामीति । विविदिषिष्यन्ति चाऽस्माकमिहोद्योगे को भाग इति । अस्तु । यथाहमसकृदवोचं न वयं बहुसख्यत्वं संश्रयामहेऽपि त्ववदात-चारित्र्यमिति । यथाल्पसंख्याकानेव जनानुद्देशस्य कृते प्राणानु-पजिहीर्षून् प्रतियन्नहं[2] सत्याग्रहमुपन्यास्थं[3] न तथा निमन्त्रणमनुवर्ति-ष्यमानस्य जनस्य भूमानम् । इदं हि विदितं वो यत्कलिकाताभवे काङ्ग्रेसोपवेशनेऽभ्युपगतेन प्रस्तावेन वयं प्रतिज्ञां कारिताः काङ्ग्रेस-निर्माणस्य प्रथमो नियमोऽस्माभिः परिवर्त्यः । सत्याग्रहविषयिकेति-कर्तव्यता चानुचिन्त्या यद्येकोनत्रिंशदुत्तरनवशतोत्तरसहस्रमितख्रिस्त-वत्सरान्तं यावत् साम्राज्येऽन्तर्नः स्वराज्यभाक्त्वं न स्यादिति । व्यृद्धे[4]-ऽस्मिन् कामे सत्यप्यननुगुणस्य गुणदोषविवेचनस्याऽन्यथावर्णनस्य च संशये सङ्गरपालनमेव नः कृत्यमापतितम् ।

प्रस्तावस्य पश्चादागतैर्व्यतिकरैरस्य दार्ढ्यमुपपादितम् । रसलेन्द्रेण वयं प्रव्यक्तं बोधिता भरतवर्षस्य स्वराज्यभाक्त्वं केनेडेत्यादीनां स्वराज्यभाक्त्वाद्भिद्यत इति । एतेऽर्थतः स्वायत्ता देशा इति स भवानभ्युपैति । भरतवर्षस्य स्वराज्यभाक्त्वमधिकृत्य ब्रुवन्नहमपि न कदाचिदन्यदचिन्तयम् । तस्य महानुभावस्य व्याहारस्या[5]यमाशयः—

---

१. प्रस्तावमधिकृत्येत्यर्थः । अथ भवन्तमन्तरेण कीदृशोऽस्या दृष्टिरागः इति शाकुन्तले ।

२. विश्वसन्, जानन् । प्रतिपूर्वाद् इण गतौ इत्यस्माच्छतृ ।

३. असु क्षेपे इत्यस्य लुङ्युत्तमैकवचने रूपम् । अस्यतेस्थुक् ।

४. विफल इत्यर्थः । इदं समृद्धमित्यस्य विपरीतार्थकम् ।

५. वचस इत्यर्थः । व्याहार उक्तिर्लपितं भाषितं वचनं वचः—इत्यमरः ।

चिरमायसैर्निगडैः संदानिता[1] भरतभूमिजा इदानीमिच्छन्ति चेत् कनकमयैस्तान् विनिमातुमर्हन्तीति । केचिच्चेममुपन्यासमभिनन्दन्तीति प्रतीयते । वयं तथा परित्रस्ता यथा ब्रिटिशसम्बन्धविच्छेदः प्रमाथं संकुलं[2] च करिष्यतीति प्रतिपद्यामहे । भवतु । अहं स्वाभिप्रेतं पुनर्विवरीतुमिच्छामि । अहिंसोपासकस्यापि मे यदि संकुलस्यागतिकः साक्षी वा स्यां सदातनस्य पारतन्त्र्यस्य वेति कामचारः स्यात्तर्ह्यसंशय्य ब्रूयामिह देशे संकुलसाक्षित्वं सुतरां रोचयिष्यामीति । अहं हिन्दून् मुसलमीनांश्च संप्रहरमाणानन्योन्यांश्च निघ्नतो दिदृक्षेय । न तु विराजितं नः पारवश्यमनुदिनं दिदृक्षे । अहं मन्ये हैमा निगडा आयसेभ्यो नितरां हीयन्ते यतो मानवः परेषां पारुष्यं क्लेशावहत्वं चानुभवति पूर्वांस्तु प्रस्मरति[3] । तदस्य शीलम् । अतो यदि भरतभुवा निगडैः संयतया भाव्यं कामये त आयसाः स्युर्न तु सौवर्णा महार्घधात्वन्तरविकारा वेति ।

यावदेव वयं स्वातन्त्र्यं संकीर्तयामस्तावदेव कैश्चिदुद्यानवास्तव्याक्रमवेताल उत्थाप्यते । नाहं तदाऽऽक्रमं गणये यदास्माभिर्ब्रिटिन इत्यनेन पराधीनतासम्बन्धो विघटितः । अप्रतिसमाधेयोऽनागतेः श्रेयसि मे विश्वासः । नृहत्यावर्जितेन परिवर्तनेन भारतं वर्षं स्वातन्त्र्यमाप्स्यतीत्यचला मे श्रद्धा । श्रीज्वाहरलालो नः कर्णधारः[4] । नाहं मन्ये वयं कर्हिचिदपि प्रशस्यतरं तरुणमध्यक्षं लब्धास्मह इति । कामये तस्मिन् कार्यधुरां वहति सति वयं सिद्धार्थाः स्यामेति । इदं च

१. बद्धाः । दान अवखण्डने इति धातोर्भौवादिकान् क्तः । उपसर्गवशादर्थान्तरत्वम् ।
२. व्याकुलता, व्यस्तता इत्यर्थः । अत्रार्थे तुमुलं रणसंकुले इति पठन्नमर एव प्रमाणम् ।
३. प्रपूर्वस्य स्मरतेर्विस्मरणेऽर्थे रूढिरित्यभियुक्ताः ।
४. कर्णधारस्तु नाविकः—इत्यमरः । कर्णः श्रोत्रमरित्रं च इति दुर्गः । तं धरतीति ।

संभवतितरां यदि यूयं प्रतिज्ञां पालयिष्यथेति।

फाल्गुने मास्याद्येषु दिवसेष्वमदावाद इत्यत्र मिलितया काङ्ग्रेस-कार्यनिष्पादिकया सभयाऽयमुपन्यासोऽभ्युपेतः

सत्याग्रहाभ्यनुज्ञानम् —एषोऽभिप्रायः कार्यनिष्पादिकायाः सभाया ये पूर्णस्वराज्यावाप्तयेऽहिंसां धर्ममभ्युपयन्ति ते सत्याग्रहं प्रस्तुयुरिति। यतः काङ्ग्रेसपरिषदि न केवलमेवञ्जातीयका नरा नार्यश्चान्तः समाविशन्ति, अपि तु तेऽपि येऽहिंसां वर्तमानायां देशस्थितावावश्यकीं सरणीं प्रतिपद्यन्ते, अतः कार्यनिष्पादिका सभा महात्मन. श्रीगान्धिन उपक्षेपमभिनन्दति, तं च तेन सहकारिण इतरांश्च यथोक्तमहिंसाधर्मिणोऽधिकरोति, ते यत्र यदा च कामयेरन् यथा यावच्चावधारयेरन् सत्याग्रहं प्रस्तुवीरन्निति।

एवमभ्यनुज्ञातो महात्मा सत्याग्रहगोचरं कार्यक्रमं व्यवसातुमारभत। व्यवसितेतिकर्तव्यताकः काङ्ग्रेससदस्यैः सह कृतपरामर्शः स राजप्रतिनिधिमुद्दिश्य घोषणापत्रमेकमलेखीत्। तस्य प्रापणाय चाश्रमिणामेकतममाङ्ग्लकुमारं रेनाल्ड् इत्याख्यं देहलीं प्रास्थापयत्।

अयं हि तत्र लोकविश्रुते पत्रे निबद्धोऽर्थः—

प्रियसुहृद्!

यावदहं निःप्रमाथं शासनातिक्रमं नातिष्ठामि तेन च यतः संशयादिमाः समा अहमभैषं तत्रात्मानं न पातयामि तावत्प्रकामं भवन्तमुपयामि विविदिषामि चौपयिकान्तरम्[२]। विशदो मे स्वो धर्मः[१]। नाहं कमपि जीवं जिहिंसामि किमुत सजातीयान् मानवान् यद्यपि ते महिष्ठं ममापकुर्युः। अतो यद्यप्यहं ब्रिटिशशासनं भरतवर्ष-

१. धर्मशीलवर्णान्ताच्च इतीनिः।
२. अन्यदौपयिकमौपयिकान्तरम् मयूरव्यंसकादिः। विनयादिभ्यष्ठक् इति स्वार्थे ठक्। उपायाद्ध्रस्वश्च इति गणसूत्रेण ह्रस्वः। स्वार्थिकाः क्वचित्प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपीति नपुंसकत्वम्।

स्याधिं मन्ये तथाप्यहमेकमप्याङ्ग्लम्, उपपन्नं परिग्रहे[1] तस्याधिकारं वा नोपजिघांसामि ।

नान्यथा ग्रहणीयं मे वचः । यद्यप्यहं ब्रिटिशशासनं भरतवर्षस्याङ्गारं मन्ये नाहं तत एव कारणदाङ्ग्लजातिं भूमिष्ठा[2]न्मानवजात्यन्तरादपकृष्टां गणये । अनेक आङ्ग्लाः प्रियतमा मदीयाः सखाय इत्यभिमन्ये । यत्सत्यं ब्रिटिशशासनकृतापायविषये यदहं वेद्मि तत्प्रायशो विक्रान्तानां स्फुटवादिनां ब्रिटिशशासनविषये निर्विशङ्कमप्रियं सत्यं च शस्तवतामाङ्ग्लानां निबन्धेभ्य एवावेदिषम् ।

किं[3] कारणमहं ब्रिटिशशासनमाधिं मन्य इति चेत् । उच्यते । इदं हि शासनमानुक्रमिकस्वार्थसाधनविधानेन प्रणाशकर्या बहुव्ययसाध्यया दुर्वहया राज्यधुरया चैतद्देशजानां बह्वीः कोटीर्गतविभवा अकार्षीत् । इदञ्चेमं देशं दासत्वमनैषीत् । अस्मद्व्युत्पत्तिमूलं चाश्लथयत् । इदञ्च नो निःशस्त्रीकृत्य हृदयदौर्बल्यमापाद्याध्यात्मिकीं नो हानिमजीजनत् । सार्वत्रिकेण निःशस्त्रीकरणेन विध्यन्तरैश्च वयं कातरस्येव वैक्लव्यं गमिताः ।

यथेतरेषामनेकेषामेतद्देशजानां तथा ममाप्यासीदाशंसा प्रस्तुतेन मन्त्रणसमाजेन प्रतीकारः कश्चिदुपलप्स्यत इति । यदा पुनर्भवान् स्पष्टमवादीत्—अहं वा ब्रिटिशधीसचिवसभा वा साम्राज्येऽन्तः पूर्णस्वराज्यस्य पद्धतीमनुमादिष्यत इति प्रतिज्ञातुं न पार्यत इति तदा मन्ये निरुक्तः समाजस्तमभ्युपायं निर्देष्टुं नाशकद्यस्य प्रबुद्धा भरतवर्षीया बुद्धिपूर्वमुत्कण्ठन्ते ऽबुद्धिपूर्वञ्चाप्रबुद्धाः कोटयः । पुरा कदापि

---

१. परिग्रहो धनम्, स्वं वा । पत्नीपरिजनादानमूलशापाः परिग्रहाः— इत्यमरः ।

२. भूमौ तिष्ठतीति, तस्मात् । सुपि स्थः इति कः । आदेशप्रत्यययोः इति षत्वम् ।

३. निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम् इति वार्तिकेनात्र किमः कारणशब्दाच्च प्रथमा ।

प्रतिनिधिसभाया निर्णयः पूर्वं नागृह्यतेति न वाच्यम्। पुरापि धीसचिवसभया प्रतिनिधिसभाया निर्णयं प्रागेव ज्ञात्वा कस्मैचित् प्रत्यश्रावीत्युदाहर्तुं शक्यम् ।

यतो देहल्यां वृत्तो भवता संलापः फलविधुरोऽभूदतः पण्डितः श्रीमोतीलालोऽहं चागतिकौ सताष्टाविंशत्युत्तरनवशतोत्तरसहस्रतमे ख्रिस्ताब्दे कलिकाताभवे काङ्ग्रेसोपवेशने विहितां दृढां प्रतिज्ञां तरीतुमपेक्षितं प्रक्रममभजावहि । पूर्णस्वराज्यस्वीकृतिर्नोद्वेगकरी[1] भवितुमर्हति यदि भवता स्वस्मिन् प्रख्यापणे स्वराज्यमिति पदमभ्युपेते तदर्थे प्रायोजि । यतो न खलु[2] पर्यनुयोज्यैर्ब्रिटिशनीतिज्ञैः प्रतिपन्नं स्वराज्यं परमार्थतः स्वातन्त्र्यमिति। अहन्त्विदमाशङ्के प्रत्यासीदति भविष्यति काले भरतवर्षायैतल्लक्षणं स्वराज्यं न कदापि दित्सितमभूत् ।

परमेतत्सर्वं पुरावृत्तम् । प्रख्यापणादूर्ध्वं वृत्ता बहवो व्यतिकरा ब्रिटिशनयसरणिमभिव्यक्तं सूचयन्ति । इदं हि प्रव्यक्तं प्रतिभाति ब्रिटिशराजकार्यधुरन्धरा ब्रिटिशनीतिमार्गे तं परिवर्तं नेच्छन्ति येनाङ्गलदेशस्य भरतवर्षेण सह निगमो[3]ऽवसीदेत् । यदि स्वार्थसाधनक्रममवसाययितुं न किञ्चिदनुष्ठीयते तर्हि भारतं वर्षमुत्तोत्तरं त्वरितया गत्या रिक्तीकरिष्यते ।

धनागमस्यावेक्षकः पारिषद्योऽष्टादशपणप्रमाणं व्यवस्थितं जानीते । एतद्धि कतिपयी[4]र्धनस्य कोटीरितो देशादपवाहयति । यदा

---

१. उद्वेगो भयम् । तद्धेतुः । कृञो हेतुताच्छील्यानुलोम्येषु इति टः ।

२. अत्र खलुशब्दो जिज्ञासायाम् । न खलु तामभिक्रुद्धो गुरुः इत्यत्र विक्रमोर्वशीये यथा । निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु—इत्यमरः ।

३. निगमो वाणिज्या । तत एव नैगमो वणिग् उच्यते ।

४. कतिपयशब्दे ऽयच्प्रत्ययः पुगागमश्च । अतः टिड्ढाणञ्० इत्यनेन स्त्रीत्वविवक्षायां ङीप् । तत्र मात्रजिति नेदं प्रत्ययग्रहणं किं तर्हि प्रत्याहारग्रहणम् । क्व संनिविष्टानां प्रत्याहारः । मात्रशब्दादारभ्य आ अयचश्चकाराद् इति भाष्यम् ।

चैवंविधस्यानर्थस्य प्रतिविधित्सया निःप्रमाथेन विधिना बलवद्यत्यते तदाऽवशो भवानप्यृद्धिमतः क्षेत्रवतो जनांस्तथा प्रचोदयति यथा त इमं देशं चूर्णपेषं[1] पिंषतोऽस्य शासनस्य कृते निरुक्तं प्रयत्नं विहन्तुं भवतः साहायकमुपेयुः ।

लवणेऽपि तथा करन्यासो यथाऽधनैर्गरिष्ठो भरो वोढव्यो भवति । शीधु[2]भैषज्यादिशुल्कमपि दरिद्रेभ्य आयाति । सर्वः स्वाच्छन्द्यमर्हतीति तत्समर्थनायां मिथ्याऽपदेशः[3] ।

एकतो भागधेयभारो दरिद्रान् समपीपडत्, अपरतश्च कर्तनाख्यस्य परिशिष्टव्यवसायस्य विनाशस्तेषां धनार्जनशक्तिं व्यनीनशत् ।

भरतवर्षस्यैश्वर्यभङ्गोपाख्यानं न तावत्पूर्तिमेति यावत् तन्नाम्ना कृतान्यृणानि नानुसन्दध्मः । अधिगतस्वातन्त्र्येण भरतवर्षेणेमान्यृणानि निपुणं परीक्षणीयानि । तानि चापाकरणीयानि यान्यविदितपक्षपातया न्यायसभयाऽनुपपन्नानि न्यायादपेतानि चाध्यवसीयेरन् ।

दृष्टान्तिता इमेऽन्याया यस्येह जगति सर्वमहार्घता सूपपादा तस्य शासनस्य वैदेशिकैः प्रवर्तनाय समाचर्यन्ते । तद्यथा । भवानेकविंशतिशतादप्यधिकानि रूप्यकाणि मासिकं वेतनं लभते । अपरोऽपि भवत आगम एतदतिरिक्तः । ब्रिटिशप्रधानसचिवः प्रतिवर्षं पञ्चसहस्रं सुवर्णमुद्राः प्राप्नोति । तेन मासिकं तस्य वेतनं चतुःशतोत्तरपञ्चसहस्रादधिकानि रूप्यकाणि भवति । प्रचरितेन विनिमयप्रमाणेन भवान् प्रत्यहं सप्तशतादधिकानि रूप्यकाण्यधिगच्छति, अणकद्वया-

---

१. शुष्कचूर्णरूक्षेषु पिषः इति णमुल् ।
२. मैरेयमासवः शीधुः—इत्यमरः । भेषजमेव भैषज्यम् औषधम् । अनन्तावसथेतिहभेषजाञ्ञ्यः इति स्वार्थे ञ्यः ।
३. निमित्तं, हेतुः । अपदेशः पुमाँल्लक्ष्ये निमित्तव्याजयोरपि—इति विश्वः ।

दल्पीयांश्च सामान्यतः प्रात्यह्निको भरतवर्षीयाणामायः ब्रिटिशप्रधान-सचिवस्तु प्रत्यहमशीत्युत्तरशतं रूप्यकाण्यवाप्नोति, रूप्यकद्वयं च तत्रत्यः सामान्यतः प्रात्यह्निक आयः।

अञ्चितजानु[1]रहं याचे भवानिदं विमृशतु। यदहं पुरुषविशेष भवन्तमदृष्टान्तयं तत्र विरसस्य तथ्यस्य सम्यग् बोधनमेव मेऽर्थः। मनुष्य इत्यत्रभवति मेऽस्ति बहुमानः, येनाहं भवन्मनो दुनुयामि-त्येषितुं न पारयामि। यद् राजप्रतिनिधेर्वेतनविषयेऽवितथं तत् सामान्यत इतरेषामप्यधिकृतानां विषयेऽविपरीतं वेद्यम्।

अमूलं बलेरपकर्षणं[2] शासनव्ययस्यापि तादृशमपकर्षणमन्वायतते। तच्च शासनपद्धतेर्विपरिणतिमपेक्षते। सा चर्ते स्वातन्त्र्यान्न संभविनी। एतदर्थकान्येव स्वतः प्रवृत्तानि माघे कृष्णद्वादश्यां भवानि भावविजृम्भणानि यत्रानेककोटिमिता जानपदा अप्यन्तःप्रवृत्त्या कर्तृतामभजन्त। एषां हि निष्पेषकाद् भाराद्विमोक्ष एव स्वातन्त्र्यम्।

सादरमभ्यर्थये भवानेतेषामनिष्टानामविलम्बिताय विप्रकर्षणा[3]-योपायमास्थास्यति येन यादृच्छिकेन साचिव्येन भुवनभावुकोत्कर्षो-त्कानां[4] परस्परोचितसाह्यवाणिज्यसमयावधारणसमुत्सुकानामर्थ-वत्समानां समैः संमिलनमात्मानं लप्स्यते।

परं यदि भवान् दोषानेतान् समाधातुमपर्याप्तमात्मानं मन्यते, अयं मेऽर्थबन्धश्च नेषदपि भवन्तं प्रयुङ्क्ते तदाहं वर्तमाने फाल्गुने

---

१. जानुनी अन्वाच्येत्यर्थः। एवं हि पारसीकाः प्रार्थयन्ते। तदितरेऽनु-कुर्वन्ति। अञ्चितमिति अञ्चु गतिपूजनयोरित्यस्य णिजधिकस्य निष्ठायां रूपम्।

२. न्यूनत्वापादनम्। मूल्योत्कर्षापकर्षा' इत्यत्र यथा। अपकर्षेदेवं यावत् पञ्चदश इत्यत्र वा यथा।

३. दूरीकरणायेत्यर्थः। कामान्दुग्धे विप्रकर्षत्यलक्ष्मीम् इत्युत्तरे रामचरिते।

४. भुवनस्य जगतः भावुकं कल्याणं तस्योत्कर्षः वृद्धिः तत्रोत्कानामुत्कण्ठिता-नाम्। उत्क उन्मनाः इत्यमरः। उद्गतमनस्कवृत्तेरुच्छब्दात्स्वार्थे कन्।

मासि शुक्लैकादश्यामाश्रमस्थान्कानपि सहकारिणः सहादाय लवणविधानमतिक्रमितुं प्रयास्यामि। अहमेतं करं दरिद्रदृष्टयाऽधर्म्यतमं मन्ये। जाने भवान्मां बद्ध्वा म संविधानं प्रतिहन्तुमर्हति। परमाशासेऽनेकसहस्रसंख्यका विनीता भरतवर्षीया मत्तोऽनन्तरमभ्युपेतार्थं करिष्यन्ति, तेन च लवणविधानेन विधिग्रन्थकलङ्कभूतेनात्मानं दण्डयतां नेष्यन्ति।

नायं पत्रार्थोऽपकारगो[1]रित्यभिप्रेतः। अयं हि निश्चयात्मनः सत्याग्रहिणः पुण्यं सामान्यं च कृत्यम्। अत एवाहमेतदर्थमेव विधात्रा विसष्टेनेव भरतवर्षोद्देशमप्रमाथं च श्रद्दधानेनाङ्गलेनैकेन मित्रेणेदं पत्रं प्रापितम्।

इति निवेदयते

भावत्कः सुहृद्

मोहनदासकर्मचन्द्रो गान्धी ॥

एतत्पत्रार्थं प्रतिब्रुवन् राजप्रतिनिधिरेतमर्थमुपन्यबन्धयत्।

नूतनदेहलीतः।

फाल्गुने शुक्लपञ्चम्याम्।

प्रिय सुहृच्छ्रीगान्धिन्!

तत्रभवान् राजप्रतिनिधिरभिप्रैति फाल्गुने मासि शुक्लद्वितीयस्यां विन्यस्ताक्षरं पत्रं प्राप्तमित्यभ्युपेयामिति। भवानेतादृशं कार्यक्रममनुचिन्तयति येन शासनातिक्रमो दुर्निवारः प्रजास्वास्थ्यसंशयश्च भविष्यत इत्युपलभ्य स दूयते।

इति निवेदयते

भावत्कः सुहृद्

जी० कनिङ्गहम्

अनधिकारी सचिवः॥

---

१. मम वचनं नानुज्ञास्यते चेदहं तेन तेन प्रकारेण त्वापकरिष्यामीत्यादिस्वरूपा।

अधिगत एतस्मिन्प्रतिवचसि श्रीगान्धिनः पत्रे समुदिष्टं प्रयाणम-
विश्रुतं प्रयाणम् धिकृत्योपश्लोक्यो[1] राजनीतिलब्धवर्णः[2] पण्डितः श्रीज्वाहरलालनेहरुः काङ्ग्रेसाध्यक्ष इत्थं लोकान् प्रैरयत्—

कृतोऽपरिवर्तनीयो निश्चयः अतः षष्ठे दिवसे फाल्गुने शुक्ल-द्वादश्यां श्रीगान्धी निःप्रमाथं शासनातिक्रमं प्रक्रमितुं बह्वर्थां यात्रां प्रारभते। स याति वीराश्चानेके तेन सह यान्ति। कस्तमनुयातुं सज्जः। कोऽप्रयुक्तो जोष[3]मासिष्यते यदा चिरविलुप्तस्य स्वातन्त्र्यस्य प्रत्यापत्तये भरतदेशजा महान्तं यत्नमातिष्ठन्ति। को ऽनुद्युक्तोऽवस्थास्यते यदा वीरतमा भरतभूमेः पुत्रा दुहितरश्च प्रियायास्तस्याः कृते प्रद्राणान् कोटिशस्तज्जांश्च सुखयितुं क्लेशं कारावासं निधनमपि च रोचयन्ते। द्वय्येव नः सर्वेषां गतिः। अपर-तन्त्रता परवत्ता च। सङ्घद्वयमेवेह जनपदे भवितुमर्हति—स्वातन्त्र्यं प्रेप्सुश्चमूः परार्थोपघातेन स्वार्थसाधिकाऽनीकिनी च। कतरां गतिं गच्छामः कतरस्मिंश्च संघ आत्मानमन्तः पातयामः। सर्वः चेतस्य-स्योत्तरं विचिनोतु। भरतवर्षस्य च यस्मा अर्थाय वयमुद्युञ्ज्महे तस्य च सदृशानि कर्माण्येव तदुत्तरं सन्त्विति।

फाल्गुने सितषष्ठ्यां भगवदाराधनवेलायां संकल्पितं प्रयाणं विषयीकृत्य श्रीमहात्माऽऽश्रमस्थांश्छात्रानित्थमन्वशात्—

यावदुद्देशो नासाद्यते न तावत् प्रत्यावर्तनीयमिति व्यवसीयताम्। कारावासमेव लम्भयिष्यध्व इति नावधार्यताम्। न नावकल्पये[4]

---

१. श्लोकैरुपस्तुत्य इत्यर्थः। सत्यापपाश—इत्यादिना णिच्। अचो यत्।
२. विचक्षण इत्यर्थः। धीमान्सूरिः कृति कृष्टिर्लब्धवर्णो विचक्षणः—इत्यमरः।
३. तूष्णीमित्यर्थः। तूष्णीमर्थे सुखे जोषम्—इत्यमरः।
४. संभवतीति मन्य इत्यर्थः।
नावकल्प्यमिदं ग्लायेद्यत्कृच्छ्रेषु भवानपि—इति भट्टिकाव्ये।

यूयमभ्यवस्कन्त्स्येध्वे[1] बहुविधस्य कदर्थनस्यास्पदीक्रियेध्वे चेति। युष्माकं यः कश्चिदात्मानमनलंकर्मीणं[2] पश्यति स स्वं नाम संहर्तुमभ्यनुज्ञायते। परं प्रक्रान्ते प्रयाणे यदि कश्चिद्धैर्येण हास्यते तर्ह्यहं नितान्तं दविष्ये[3]। वयं प्रत्यहं पञ्च क्रोशान् पादचारेण चरिष्यामः। पूर्वाह्णे पराह्णे च प्रयास्यामः। मध्याह्ने विश्रमिष्याम इत्येष क्रम इति।

प्रस्थानम्

संनिकृष्यमाणे प्रस्थानदिवसे सर्वं सुष्ठु संव्यधीयत। फाल्गुने शुक्लैकादश्यां सर्वां क्षपां शतशो जना आश्रमाभोगे[4] समुदिता गीतानि गायन्तो जयतु जयतु महात्मेति च घोषयन्त आसत। विभातायां विभावर्यामागते च द्वादशे तिथौ सर्वे प्रसन्नवदना उत्साहवन्तः प्रमुदितचेतसश्चालोक्यन्त। अयं वासर इतिहासग्रन्थेषु प्रख्याततमो भविता। अत्र ह्रीश्वरप्रेरितोऽहिंसादेशक इदं निदर्शयितुं प्रायान्निःप्रमाथापि संयत्[5] संभविनीति।

ऐलिस्सेतुरित्यत आरभ्याश्रमं यावदनुमार्गं शतशः पुरुषाः स्त्रियो बालाश्च महात्मनो दर्शनस्योत्कण्ठमानास्तं च तस्यैकोनाशीतिं स्वेच्छासेवकांश्चापि[6]पृच्छिषमाणाः पङ्क्तिक्रमेण स्थिताः। आश्रमाभोगेऽङ्गुलमात्रोऽपि प्रदेशो जनानध्यासितो नासीत्।

---

१. युष्माकमभ्यवस्कन्दनं स्यादित्यर्थः। अभ्यवस्कन्दनं त्वभ्यासादनम्—इत्यमरः। स्कन्दिर् गतिशोषणयोरित्यस्य इरित्त्वाद् अनिदितां हलः इत्यादिनोपधाय नस्य लोपः।

२. कर्मणेऽलम् अलंकर्मीण.। स न भवतीति। अपडक्षाशितङ्गु० इत्यादिना स्वार्थे खः।

३. दूङ् परितापे इति दैवादिकाद्धातोर्लृटि रूपम्।

४. आभोगः परिपूर्णता—इत्यमरः।

५. युद्धमित्यर्थः। स्त्रियः संयत्समित्याजिसमिद्युधः इति युद्धनामस्वमरः।

६. आङ्पूर्वात्प्रच्छेः सन्, तत आङि नुप्रच्छ्योः इत्यात्मनेपदविधानाल्लटः शानच् आमन्त्रयितुकामा इत्यर्थः।

आगाराद्बहिरागमात् पूर्वभवे विंशतिकलात्मके काले महात्मा कांश्चित्स्थानीयान् संभाविता[1]ञ्जनानदर्शत् ।

सार्धषण्नाडमितायां प्रगेतन्यां वेलायां श्रीमहादेवेन, सम्प्रति स्वेच्छासेवकतामापन्नेन स्वसचिवेन श्रीप्यारेलालेन च समेतः सोऽगारान्निरक्रामत् । तस्याष्टसप्ततिः स्वेच्छासेवकाः प्रसेवान्[2] शय्योपकरणानि च वहन्तो द्विशोऽन्वगायन् ।

श्रीगान्धी विंशतिं कला अस्थात् । स भगवन्तं प्रार्थयत । आश्रमवास्तव्या अङ्गनास्तस्य भालं कुङ्कुमकर्दमेनातिलकयन् स्वहस्तकृत्तेन सूत्रेण च तमस्रजयन्[3] ।

श्रीगान्धी यथापुरं जघनवासोऽवस्त, खद्दराख्येन पटखण्डेन च तनूमाच्छादयत् । प्रशान्तगम्भीराकृतिः समानीतकरपुटः स भक्तवत्सलं सिद्धिदं परमेशं प्रार्थयत । ततः प्रायिकं स्मेरत्वमपुष्यत्[4] ।

ततः स्वस्तिवाचनमभूत् । सर्वं आश्रमस्थो महात्मानमामन्त्रयत । श्रीगान्धी सर्वमाशिषाऽऽशास्त सर्वस्य च पृष्ठं हस्तेनामृशत् । आप्रच्छनं नितान्तं हृदिस्पृगभूत् । सर्वस्य संनिहितस्य जनस्य नेत्राभ्यामानन्दजं वारि प्रास्रवत् ।

निवृत्त एतस्मिन् कृत्ये श्रीगान्धी कालघटिकायां दृशमपातयत् । सार्धषण्नाडमितायामेव वेलायां स जातीयसैन्यसङ्घेन सहाभिप्रेतायाभिक्रमाय[5] प्रायात् ।

---

१. लब्धगौरवान्, कृतादरान् । संभावितस्य चाकीर्तिर्मरणादतिरिच्यते इति भगवद्गीतासु ।

२. स्यूतानीत्यर्थः । स्योनस्यूतप्रसेवकाः—इति रभसः । एतानि वस्त्रशाणादिनिर्मितस्य थैला इति ख्यातस्य ।

३. स्रग्विणमकुर्वन इत्यर्थः । प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च इति गणसूत्रेण णिच् । इष्ठे यथा तथात्र विनो लुक् ।

४. अदधादित्यर्थः । सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् इत्यत्र यथा ।

५. अहितान् प्रत्यमीतस्य रणे यानमभिक्रमः—इत्यमरः ।

वन्दे मातरमिति घोषणायां क्रियमाणायां वेगितया स्थिरया च गत्या स प्रगात्। स तथोत्साहवत्त्वरितं चाचलद्यथा यात्रामनुयान्तः परःशता जनाश्चलितेन[1] सह गन्तुं नाशकन्। एकया होरया क्रोशादधिकोऽध्वाऽत्यक्रान्तः।

आश्रमादारभ्य एलिस्सेतुमभिव्याप्य वर्तमाने पथि कोटीश्वराः कर्मकराश्च महात्मनः सत्क्रियायामन्योन्यमस्पर्धन्त। सर्वे समेता जना महात्मानं मुद्राभिर्जपापुष्पदलैः कौङ्कुमैः क्षोदैश्चावाकिरन्।

सार्धदशनादमितायां वेलायां सत्याग्रहदलमसलालीत्याख्यं ग्राममापत्। ग्रामजनाः पताकाभिः पुष्पैर्दुन्दुभिभिर्वंशैश्च[2] महात्मन आगममभ्यनन्दन्। असलालीग्रामस्थाः कुलाङ्गना महात्मन उपदेशमुपश्रोतुमिदंप्रथमतयाऽवगुण्ठनमपानयन्। परःसहस्रान् समवेतान्जनान् संबोधयन्महात्मेदमवोचत्—विदितमस्तु वः सर्वेषां पणनवकार्घं खारिप्रायपरिमाणकं लवणमस्माभिः सपादरूप्यकेण क्रेतव्यं भवतीति। दरिद्रा अस्मासु शासनाधिकृतेषु च शापान्मुञ्चन्ति। यदि धनिका एव लवणकरं दाप्येरन्नुपपन्नमिव स्यात्। साम्प्रतिकी दुःस्थितिरुभयथा सुसमाधाना[3]—प्रमाथेन सत्याग्रहेण च। यद्यहं शासिता स्यामहं तमालपत्रगुटिकासु मद्येषु च करं न्यस्येयम्। युष्माभिः काराप्रवेशान्नोद्विजितव्यम्[4]। यदि त्रिंशल्लक्षमिताः सौराष्ट्राः पुरुषाः स्त्रियश्च कारानिक्षेपं लभेरंस्तर्हि कस्यामपि राजकीयकारायां तेषां वासं परिकल्पयितुं प्रदेशो नाप्येत। सर्वथा लवणकरापाकरणं साध्यम्। असलालीग्रामस्थाः कथं कियच्चास्या युद्धप्रवृत्तेरुपकरिष्यन्तीत्यावेदयन्तु। येऽत्र स्वेच्छासेवकत्वमिच्छन्ति ते स्वं स्वं नामधेयं कथयन्तु। आत्मानमधिकृत्येदमेव विवक्षे मयाऽवश्यं

१. प्रस्थितेन सैन्येनेत्यर्थः। प्रचक्रं चलितार्थकम्—इत्यमर।

२. सुषिरवाद्यविशेषैः। कूजद्भिरापादितवंशकृत्यम् इति रघौ।

३. आतो युच् इति खल्विषये युच्।

४. विज इट् इति इडादिप्रत्ययो ङिद्वद्भवति। क्ङिति च इति गुणनिषेधः।

यातव्यं करायां च वस्तव्यं जीवितं वोत्स्रष्टव्यमिति। नान्यच्चिचकीर्षे। आश्रममसलालीं वा नाविवृत्सामि[1]। मया निश्चितोदर्कः प्रक्रम आस्थितः। नाहमिमं विजिहासामि[2]। मामनु युष्माभिः कार्यभारो वहनीयः। सुविचिन्त्य कार्यं प्रारम्भणीयम्। परं प्रारभ्य न विरमणीयम्। प्रयाणाभिमुखोऽहं जनानामाशिषः प्रत्यग्रहीषम्। लवणकरापनुत्तिसाधना स्वराज्यावाप्तौ प्रथमारम्भः। शिष्टं कृत्यं लघ्वनुष्ठास्याम इति।

चैत्रे कृष्णद्वितीयायां सत्याग्रहिमण्डलमानन्दसंज्ञं संवसथं[3]मध्यगमत्। यावत्तन्न परापतत्तावत्सर्वः पन्थाः प्रोक्षितो नीरजस्कतां नीतः। अत्र श्रीगान्धी महतो जनसमुदायस्य साम्मुख्यमादधत्सुतरां हृदयग्राहि भाषितमकरोद् यस्यायं संक्षिप्तोऽर्थः—सत्याग्रहसरणिः प्रणय[4]सरणिरिव हुताशं मध्यतो याति। इयं ह्यात्मानं प्लोषतीतरांश्च निर्वापयति[5]। यत्सत्याग्रहिमण्डलमहं नयामि तत्प्राणव्ययेन प्रतिज्ञानं पालयिष्यति। श्रद्दधे ममानुयात्रिकाः सत्याग्रहिण इव प्रतिपन्थिषु[6] मन्युं वा प्रद्वेषं वाऽकृत्वा प्राणान्मोक्तुमर्हन्तीति।

आनन्द इत्यतः प्रस्थाय श्रीगान्धी नवा इत्याख्यं ग्राममापत्। अत्र शुश्रूषून्ग्रामीणान् संबोधयन्महात्मेदमभाषिष्ट—कियच्चिरं यूयं रक्षिवृत्तिमुपजीवन्तः शासनाधिकृतः सहोद्योक्ष्यध्वे तत्साहायकं वा

---

१. आवर्तितुमिच्छामि। वृद्भ्यः स्यसनोः इति वा परस्मैपदम्। न वृद्भ्यश्चतुर्भ्यः इतीण्निषेधः।

२. ओहाक् त्यागे इत्यस्मात्सनि लटि रूपम्।

३. समौ संवसथग्रामौ—इत्यमरः।

४. प्रणयः प्रेम। प्रणयास्त्वमी। विस्रम्भयाच्ञाप्रेमाणः — इत्यमरः।

५. तापं शमयतीत्यर्थः। स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः इति शाकुन्तले।

६. शत्रुषु। परि दोषाख्याने पन्थयितुं शीलः। अभिघातिपराऽरातिप्रत्यर्थिपरिपन्थिनः—इत्यमरः।

करिष्यथत्र इति। सत्याग्रहिणः किमपि गोप्यं नास्ति। प्रकाशा मेऽभ्युपायाः। लवणादौ प्रथमायां जीवितापेक्षायां ये राजमन्त्रिण करं न्यस्यन्ति रक्षिषु चाधिकं धनमुत्सृजन्ति तेषु विरक्तेर्जननं मे धर्मः। यद्यहं बन्दिग्राहं[1] गृह्येय श्रीवल्लभभाईपटेल इव च मासत्रयं कारायां वस्तुमाज्ञाप्येय तर्ह्यहं हृष्यामि प्राड्विवाकः शासनाधिकृताश्च हृष्यन्ति। ममासेधदिवस उत्सवेनाभिनन्द्यताम्। परं नैतत् पर्याप्स्यति। त्यागपत्रैरेवाहं न सन्तोक्ष्यामि। लवणकरे सत्याग्रहमास्थास्याम इति भूयोभिर्युष्माभिः प्रतिज्ञायतामितीच्छामि।

चैत्रे कृष्णसप्तम्यां सत्याग्रहिमण्डलमङ्कोलेतिनाम्नि ग्रामे न्यविशत्। तत्र लोकाः श्रीगान्धिभाषितान्यावेदयितुं समाजेषु संनिहितं रक्षिणामेकं कार्याध्यक्षं सर्वस्मात् संव्यवहारात्तथा बहिरकुर्वन् यथा स भोज्यादिकमपि नालभत्। इदं च महात्माऽवेदीत्। अपरेद्युः स जम्बूसर इत्यत्र प्राप्त एतदधिकृत्य लोकानेवमबूबुधत्—

नायं नो धर्मो राजनियुक्ताननशनेन नाशयेमेति। यदि कश्चिद्राजनियोगी ममाङ्गमाग्नेयगुलिकया क्षणुयात् पश्चादाशीविशेषण[2] च दश्येत तर्ह्यहं सत्यपि प्राणसंशये तद्विषं पास्यामि। इमं धर्ममाचरामि। युष्माभिरपि स एवाचर्यताम्। पञ्चनद इव बलात् प्रवर्तितैरपि युष्माभी राजनियुक्ता न प्रणन्तव्याः परं प्राणभृत इति तेभ्योऽन्नं तु देयमेव। मां कारामपि नयन्तस्ते मे मित्रधेयान्येवेति।

एवं ग्रामाद् ग्रामं यन् मनस्वी श्रीगान्धी स्वसहायेषु किमपि शैथिल्यं तनूनि च कानिचित्स्खलितान्यैक्षत। सुरतप्रदेशे यात्रायाः संविधातृषु चामितव्ययवचनीयम[3]पश्यत्। तद्यथा। स सुरतात् पयसः

---

१. उपमाने कर्मणि च इति कर्मण्युपमान उपपदे णमुल्।

२. आशीविषः सर्पः। आशिषि विषमस्येति पृषोदरादित्वात्साधुः। आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति इति ह्युक्तम्। केचित्त्वीकारान्तमाशीशब्दमाहुः। आशीमिव कलामिन्दोः इति राजशेखरः इति भानुजिदीक्षितः।

३. वक्तव्यं, गर्ह्यम्। न कामवृत्तिर्वचनीयमीक्षते इति कुमारे।

शाकादीनाञ्चाहरणमत्यर्थमद्वेट् । चैत्रे कृष्णचतुर्दश्यां भट्टग्राम इत्यत्र प्राप्तः श्रीगान्धी एतत्सर्वं मनसि कृत्वा नक्तं समेतांल्लोकान् हृदयग्राहिणीमर्थ्यामिमां गिरमगादीत् अहमनुदिनमात्मनि स्वीयेषु सहायेषु च दौर्बल्यमीक्षे । अतोऽहं सुरतस्थान् कर्मिणो जनान् मया सह कृतात्यन्तसंसर्गान् विज्ञापयामि न मम न च ममानुयात्रिकाणामतिरिक्ता विकारहेतव उत्पादनीया इति । वयं हि कोटिशोऽकिञ्चनान् भरतखण्डजान् प्रतिनिदध्मः । अतो वयमत्यन्तापेक्षितादधिकं व्यययितुं नार्हामः । युष्मांस्तु प्रतिनिदधानोऽहं भरतदेशजानां सामान्यस्यायस्य पञ्चसहस्रगुणं वेतनमधिगच्छति राजप्रतिनिधिरिति तमुपालभेयेति कथं युज्यते ।

यात्रावसाने परीक्षितायां गणनायां मैषा वचनीयता भूत्सर्वः सत्याग्रही भरतदेशे सामान्यस्याह्निकस्यायस्य पञ्चाशद्गुणेन द्रव्येण पोष्योऽभूदिति । अहं नितान्तं दविष्ये न्यग्भविष्यामि च । यथेदानीं फलानि शाकान् पय आदीनि च सुरतादानाययामः तन्तुवापचक्राणि च बारदौलीतः प्रज्वलनान् प्रदीपांश्च विनियुञ्ज्महे तथा मन्ये सर्वस्य सत्याग्रहिणो व्ययः सप्तपणात्मकस्य पञ्चाशद्गुणतामापत्स्यत इति । अतः कर्मिभिर्व्ययेऽत्यन्तमप्रमत्तैर्भाव्यम् । यदि पयः सुप्रापं न स्यान्नाहं तानधिक्षेप्स्यामि । प्रज्वलनाः प्रदीपाश्च नात्यन्तमपेक्ष्यन्ते विशेषतो ग्रामीणसंसत्सु ।

नैशिक्यां[1] यात्रायां कर्मकराणां केनचिदधिष्ठितदारुपीठो गुरुरेकः प्रज्वलनः प्रदीपः शिरसाऽवाह्यतेति बलवन्निन्द्यम् । प्रतीच्येष्विदमसंभवि । न जातु कश्चिद् यूरोपीय एवं गुरुं पृथुं प्रदीपं शिरसा वहेत् । यस्य मे बलात्कारिते श्रम उपपन्नः प्रद्वेषः सोऽहं कर्मकरान् बलात् कर्म कारयेयेति कथं युज्यते ।

यदृते प्रदीपादिभ्यो वयं महतीषु समज्यासु[2] संनिधातमृते च

---

१. निशाप्रदोषाभ्यां च इति वैकल्पिकष्ठञ् । निशायां भवा नैशिकी ।

२. सभासु । समज्यापरिषद्गोष्ठीसभासमितिसंसदः—इत्यमरः ।

महतो व्ययाज्जनतां सन्देशं प्रापयितुं न पारयामस्तदाहं खिद्ये। स्वातन्त्र्यार्थेऽस्मिन्नुद्योगे वयं सदःपरिकल्पनां वार्तापत्रवृत्तान्तानुच्चैर्भाषणानि वा नापेक्षामहे। स्वातन्त्र्यं हि परमेश्वरानुग्रहेणैव प्राप्यम्। पारमेश्वरोऽनुग्रहश्च मनःशौचेनान्तरज्ञानेन च विना सुदुर्लभः। यदि वयमात्मानं पाप्मभ्यो[1] न पुनीमः कोटिशो दरिद्राणां चान्तरतमाः प्रतिपुरुषा न भवामस्तदा मन्ये स्वराज्यं नाधिगंस्यते। मया तावद्योऽयं प्रक्रम आस्थितस्तमन्यथयितुं नालमस्मि। सर्वोऽपि जनो मां विरहयेच्चेदहमेकलो योत्स्ये।

वाचमवसाययन् श्रीगान्धी शौचं सेव्यतां विश्वसनशीलाभ्यो जामिभ्यो[2] मुग्धेभ्यो ग्रामीणेभ्यश्चागच्छन् सर्वः पणो निपुणमवेक्ष्यतामिति च सामाजिकान् सविनयमयाचीत्।

अद्यापि चाल्यमानया तर्कुट्या श्रीगान्धी ततः संमिलनात् प्रास्थित। स भवांस्तत्र चत्वारिंशतं कला अवदत्। तेनोदीर्यमाणानि वचांसि वाचंयमैः सामाजिकैः सादरमवहितानि। स्वेच्छासेवकानां सहायानां चातर्कितेन तर्जनेन सर्वे विस्मयमापन्नाः सर्वे च द्रवीभूताः।

श्रीगान्धी सत्याग्रहिमण्डलेनानुयातो चैत्रे शुक्लतृतीयायां प्रदोषवेलायां नवश्रीरित्यत्र प्रापत्। धामन्नित्यतो नवश्रियं यावत्सर्वो मार्गः प्रोक्षितः प्रसाधितः प्रेक्षकजनैरुभयतोऽधिष्ठितश्चासीत्। अदृष्टचर इह जनतायामुत्साह प्रादुरासीत्। परःसहस्रा जना महात्मदर्शनसमुत्सुकाः समवायन्।

---

१. पापेभ्य इत्यर्थः। अस्त्री पङ्कं पुमान्पाप्मा पापं किल्विषकल्मषम्—इत्यमरः। पुनातिरत्र पृथक्क्रियायां प्रयुक्तः। अतोऽपादानत्वात्पञ्चमी। तथा चोत्तरे रामचरिते प्रयोगः—पाप्मभ्यश्च पुनातु वर्धयतु च श्रेयांसि सेयं कथा इति।

२. कुलाङ्गनाभ्यः इत्यर्थः। जामिः स्वसृकुलस्त्रियोः – इत्यमरः।

३. अस्मीत्यहमर्थेऽव्ययम्। दासे कृतागसि भवेदुचितः प्रभूणां पादप्रहार इति सुन्दरि नास्मि दूये—इत्यत्र यथा।

पारसीकसमाजं सम्बोधयन् महात्मा सोत्साहं करुणं च प्रेरयन्मद्यक्रयविक्रयौ त्यजेयातामिति। पारसीकानां साहाय्येन मा कश्चिच्चषकमपि प्रापदिति सम्यगवधीयताम्। यदि भवन्तो लवणकरस्य मद्यव्यापारस्य चापनयनेऽमोघक्रिया भविष्यन्ति, जितमहिंसया भविष्यति। का सा शक्तिरिह जगति या तदानीं भरतखण्डजान् स्वराज्याधिगमाद्वारयिष्यति। यद्यस्ति सा तामस्मि[1] दिदृक्षे। सिद्धसमीहितो वाऽहं निवर्तिष्ये व्यसुर्मे तनुर्वा समुद्राम्भसि प्लोष्यत इत्युक्त्वोपाशमत् सः।

नवश्रीरित्यतः प्रस्थाय श्रीगान्धी चैत्रे शुक्लषष्ठ्यां जलालपुरमध्यगमत्। तत्र शुश्रूषून् समेताञ्जनान् सम्बोधयन् स इदं प्रावोचत् शबरवतीत्यतः प्रतिष्ठमानोऽहं न प्रत्यायं डाण्डीत्येतत्स्थानमाप्स्यामीति। प्रयाणप्रारम्भेऽपि मदीया अनुप्लवाः प्रयातुमभ्यनुज्ञायेरन् न त्वहमित्यचिन्तयम्। यदहमेतत्स्थानमापं तन्नाम सत्यस्याहिंसायाश्च बलं प्रकर्षं च व्यनक्ति। एतस्य कृते राजमन्त्रिणोऽपि कामयन्ते चेद्दिष्ट्या वर्ध्यन्ताम्। यतो नाहं संशये ते मां ग्रहीतुमत्यर्थं प्रभवन्तीति।

यावच्छासनातिक्रमो निःप्रमाथतां नात्येति तावदिदं द्रष्टव्यमवशिष्यते प्रयाणं सोढवन्तो राजमन्त्रिणः श्वः प्रभृति संख्यातिगैर्जनैर्लवणविधानस्य विध्वंसनं सहिष्यन्ते न वेति।

ईश्वरेच्छा चेदहं श्वः प्रातः सार्धषण्नादमितायां वेलायां शासनातिक्रमं प्रक्रंस्ये[1]। चैत्रशुक्लाष्टमी घोराज्जल्लोद्यानवैशसात् प्रभृत्यस्माकं प्रायश्चित्तदिवसः स्मृता। अतो वयमेतन्मुख ईशानं प्रार्थयामह उपवसामश्च। आशंसे सर्वे भरतखण्डजाः श्वस्तः प्रवर्तिष्यमाणं जातीयसप्ताहं तेनैव भावेन निषेविष्यन्ते येनाय-

---

१. प्रारप्स्य इत्यर्थः। प्रोपाभ्यां समर्थाभ्याम् इत्यात्मनेपदम्। स्नुक्रमोरनात्मनेपदनिमित्ते इतीण्निषेधः।

मुपज्ञात[1]। अहं दृढं विश्वसिमि यथा यथा देशकार्यतात्पर्यं[2] मन्तःकरणवैमल्यं च वर्धेते तथा तथा त्वरितं सेत्स्यति सोऽर्थो यस्य कृते बुद्धिपूर्वमबुद्धिपूर्वं वा कोटिशो भरतदेशजाः प्रयस्यन्तीति।

जलालपुरं विहाय श्रीगान्धी डाण्डीत्याख्यं गन्तव्यं स्थानमगमत्। डाण्डीत्येषाऽनुवेलमेका ग्रामटिका। अत्र केवलं द्विशतं जना वसन्ति। ते च प्रायेण मत्स्यजीवाः। कूपद्वयमेवेह कस्यापि स्वमस्ति। तत एव पानीयं प्राप्यते। अत्र किमप्यभ्यवहार्यं नासाद्यते। अत्र वास्तव्या अपि सर्वमपेक्षितं वस्तुजातं जलालपुरादानयन्ति। अब्धितीरस्थितत्वादस्य ग्रामस्य प्रकृतिः स्वास्थ्यकरी नाम[3]। अत्र श्रीगान्धी मुम्बापुर्यां शस्त्रवणिजो मुहम्मदानुगस्य श्रीनिजामुद्दीनस्य वशिनो गृहिणोऽभ्यागतोऽभूत्। तस्यैवेह गृहेष्ववात्सीत्।

अष्टम्यां निर्दिष्टात् समयात् प्राक् चिरं शतशो जना मोटराख्ययानैर्गन्त्रीरथैश्च तत्र संनिपतितुमारभन्त।

आह्निकं दैवं कृत्वा झटिति श्रीगान्धी स्वेच्छासेवकैः परःशतैरितरैर्जनैश्च समन्वितः पादोनषण्नादमितायां प्रातस्तन्यां वेलायां विश्रमस्थानात् प्रास्थित। दशभिः कलाभिः स वार्धिवेलामापत्। उरोदघ्नं[4] च जलमवागाहिष्ट। वेलावृद्ध्या स वीचिक्षोभस्तथा महानासीद्यथा पुरुषद्वयं श्रीगान्धिनः करावालम्बत। स सलिलेऽन्तः सप्त कला अवास्थित। तेन कालेनाप्लवत देवमावाहयच्च। स्वेच्छासेवकाश्च नेतारमनु कृतोदकाः समजायन्त।

अभिषेकोत्तीर्णेषु तेषु बृहत्येका जनयात्रा विरचिता। प्रष्ठे क्नूतेन[5] जघनवाससा खद्दरोत्तरीयेण च श्रीगान्धी स्थितः। पृष्ठत

---

१. उपज्ञा ज्ञानमाद्यं स्यात्—इत्यमरः।
२. तत्परे प्रसितासक्तौ— इत्यमरः। तत्परस्य भावः तात्पर्यम्।
३. प्रसिद्धेत्यर्थः। नाम प्राकाश्यसम्भाव्यकुत्साभ्युपगमेषु च—इति विश्वः।
४. प्रमाणे द्वयसज्दघ्नञ्मात्रचः इति दघ्नच्प्रत्ययः।
५. क्नूयी शब्दे उन्दे च इति भौवादिकात् क्तः। आर्द्रेणेत्यर्थः।

एकाशीतिः स्वेच्छासेवका महाञ्जननिवहश्च। उदवसित[1]मुपसर्पति महात्मनि श्रीमती सरोजिनी नायिका यात्रया संमिलिता।

सार्धषण्णादमिते काले सा जनश्रेणी वासभवनोपकण्ठे गर्तमेकमगमत्। श्रीगान्धी पङ्कपूर्णं तं गर्तं प्राविशत् प्रशान्ताकारोऽवनतपूर्वकायः[2] स प्रतिषिद्धमक्षीवपिण्डं[3] स्वतः संजातमुदहरत्। स्वेच्छासेवकाश्च तथैव पिण्डान्तराण्युदहरन्।

इत्थं वृत्ते लवणविधानातिक्रमे श्रीगान्धी परिणतप्राये दिवसे समुदिताञ्जनान् संबोधयन्नगादीत्—मङ्गल्योऽद्यतनः प्रक्रमः। शासनाधिकृता अस्मान् ग्रहीष्यन्ति वा न वा, अस्माभिस्तु स्वधर्मश्चरितव्यः। विधातरि विश्वस्यास्माभिरद्य सत्याग्रहः प्रक्रान्तः। नाहं तावल्लवणमत्र प्राप्तं यावदाप्स्यामीत्यासीन्मेऽपेक्षा यतो भूयो लवणं राजनियुक्तैर्विध्वंसितम्। गुर्जरप्रदेशस्थान् प्रयुञ्जानस्तत्रभवानिदमन्वशात्—नित्यं शमप्रधानैरहिंसाव्रतैश्च भाव्यमिति। श्वस्तः सर्वो जनो यत्र तत्र प्राप्यं लवणमासादयितुं विनियोक्तुञ्चार्हतीति चाब्रवीत्।

विरतवचसि श्रीगान्धिनि तेन प्रातर्गृहीतं प्रमृष्टञ्च द्वितोलभारं लवणं सपादपञ्चशतेन रूप्यकैः श्रेष्ठिने रणच्छोडलालशोधनाय[4] सघोषणं विक्रीतम्।

वार्तापत्रप्रतिपुरुषेण दृष्टः पृष्टश्च श्रीगान्धीत्थं समदिशत्—सम्प्रति यतः पारिभाषिको व्यावहारिको वा लवणविधानातिक्रमः समजन्यतो यः कश्चिल्लवणविधानानुरोधेनात्मनोऽभियोगं न गणयति स सर्वो यत्रेच्छेद्यत्र वा सुकरं भवेत्तत्र शिल्पेन लवणं निर्मिमीत। कर्मिणो जना यत्र तत्र शिल्पेन लवणं निर्मिमतां निर्मितं चादो

---

१. गृहं गेहोदवसितं वेश्म सद्म निकेतनम्—इत्यमरः।
२. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणेन इति तत्पुरुषः। कायस्य पूर्वः।
३. सामुद्रं यत्तु लवणमक्षीवं वसिरं च तत्—इत्यमरः।
४. एष जातिनिमित्तक उपाह्वयः।

विनियुञ्जतां ग्रामीणांश्च तन्निर्माणं बोधयन्तामिति मेऽनुशासनमिति।

एवं वृत्तो लवणविधानातिक्रमः। राजनियुक्तैरनुशिष्टा रक्षापुरुषा न केवलं नात्रान्तरायन्न[1]पि तु दूरत एवासत। परमन्यत्रातिक्रान्तलवणविधानाः शतशो जना अविलम्बितमगृह्यन्त कारासु च न्यक्षिप्यन्त। अतो द्व्यहं डाण्डीत्यत्रावस्थाय श्रीगान्धी तस्य नातिदूरवर्तिषु प्रदेशेषु विधानमतिक्रमितुमना अभूत्।

एवं निश्चित्य श्रीगान्धी प्रतिषिद्धलवणोद्धरणेन शासनमतिक्रमितुं भीमरदनामानं ग्राममगच्छत्। तत्र हि बहून् दिवसान् रक्षापुरुषा इतस्ततोऽदरीदृश्यन्त। लवणविधानमतिक्रामन् महात्मनस्तनूजः श्रीरामदासश्चाध्रियत। महात्मन आगमात्प्रागेव स्वेच्छासेवकाः कार्यमारप्सत। रक्षिणोऽत्यन्तं तिरोदधत[2]। नैकोऽपि रक्षापुरुषस्तं प्रदेशमभितः संन्यधत्त।

श्रीगान्धी स्वेच्छासेवकांस्तत्र समुदितांल्लोकांश्च सम्बोधयन्नभाणीत्—राजमन्त्रिणो नेतॄन्धृत्वाऽस्माकं नाडीं परीक्षन्ते प्रतीतिं चोत्पादयन्ति। इदं च नः कृत्यं कारावासेन न वयं भीषयिष्यामह इति प्रदर्शयेमेति। नायकानामनारतमागच्छन्तीभिरासेधवार्ताभिर्जनितो गुरुः प्रहर्षो न मे वपुषि माति। स्वेच्छासेवकानामभिमुखीभूय महात्मेत्थमात्मनः परितोषमकथयत्—केषुचिद्वृद्धेष्वपि युष्मान् प्रसन्नवदनान्दृष्ट्वाहं प्रीये। आशासे यदा युष्मासु केचन क्षता मृताश्च भुवि शयीरन्, तदापि सर्वान्वस्तथैव प्रसन्नवदनान्द्रक्ष्यामीति। जातीयसप्ताहं यावच्चणकाद्यन्नमेव यथापुरमुपजीव्यताम्। अतीते तस्मिन्यथाकामं भोजनान्तरमाश्रीयतामिति च तानुपादिशत्। ततोऽग्रेऽप्येतदेवोपभुज्यतामितीच्छामि। साम्प्रतं लोका युष्मभ्यमभ्य-

---

१. अस्मिन्कर्मणि विघ्नं नाकुर्वन्नित्यर्थः। मध्ये नागच्छन्निति पदार्थः।
२. अन्तर्दधते स्मेत्यर्थः। अत्र दधातिरकर्मकः। तथा च प्रयोगः—इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे इति।

वहार्यं ददति। किं करिष्यध्वे यदि ते राजप्रेरणया तद्दानं प्रत्याचक्षीरन्निति व्याहृत्य व्यरमत्सः।

पुनः श्रीगान्धी डाण्डीत्येतत्प्रत्यावर्तत। तत्र चैत्रे शुक्लचतुर्दश्यां महान्तं जननिवहं सम्बोधयन्स्माह—एकविंशत्युत्तरनवशतोत्तरसहस्रमिते ख्रिस्ताब्दे कृतान्येनांसि पुनरद्य समाचर्यन्त इत्यावेदयन्ति पत्राणि मया मुम्बापुरीतः प्राप्तानि। तत्र हि केचन श्रद्धोन्मादवन्तोऽन्तिकस्थानां जनानां शिरोभ्यः शिरस्का[1]न्यपनयन्तीति वृत्तान्त उपलब्धः। नाहं जाने सत्या प्रवृत्तिरियमिति। परं यद्येवमिदमतीव शोच्यम्। एतादृंशि हि कर्माणि प्राप्तप्रायमपि विजयमस्मत्त आच्छिन्दन्ति। नेदं परप्रमाथकरमायोधनम् प्रत्युतात्मपीडाकरम्। यत्र देशहितां कार्यपरिपाटीं नानुवर्तन्ते ते हृदयङ्गमैर्वचोभिर्विज्ञाप्याः। अन्ये स्वाभिप्रायान् न बलाद् ग्राह्याः। इदं मे वाचिकं[2] यत्र तत्र लोकाः श्रावयितव्याः। यदि यूयं पर्याप्तमन्तःशुचय उत्साहवन्तश्च तर्हि स्खलत्सु सत्याग्रहमास्थातुमर्हथ। यदि मे पर्याप्ता विशुद्धिरुत्साहश्च स्यातामहं स्वयमेव प्रमाथे प्रवृत्ते सत्याग्रहमास्थास्यामि।

परमिदानीं युद्धं विरमयितुं नालमस्मि। इदं हि मे चरमं युद्धम्। अहं यत्किमपि कुर्यां न तद्युद्धप्रवृत्तिं विच्छेत्स्यति। परं यूयं मां सत्याग्रहपरिग्रान्न वारयिष्यथ यदि लोकः साहसं कुर्यात्। इदं च मे कर्म न यन्त्रेणेव कार्यतेऽपि तु सहजावबोधेन प्रवर्तते।

अहं प्रतिपद्येऽहिंसेति मे मर्मस्थानम्। यदा कदाचिदहमभ्युपाय इति वा धर्म इति वाऽहिंसामभ्युपेतवतो जनानितरान्प्रमथ्नतः शृणोमि तदा क्षुभ्यामि कञ्चित्कालं रामनाम जप्त्वैव च स्वस्थमना भवामि। यस्य म एवंशीघ्रवेदि[3] चेतः सोऽहं न वेद कदाहं प्रायोपवेशनं[4]

---

१. शीर्षकाणीत्यर्थः। शिरसः प्रतिकृतिः शिरस्कम। इवे प्रतिकृतौ इति कन्।

२. सन्देशवाक्। सन्देशवाग्वाचिकं स्याद् इत्यमरः। वाचो व्याहृतार्थायाम् इति ठक्।

३. शीघ्रं वेदयते चेतयते इत्येवंशीलम्।

४. संन्यासवत्यनशने पुमान् प्रायः—इत्यमरः।

कुर्यां यदि येषु साध्वाचारः संभाव्यते ते प्रमाथे प्रवर्तेरन् । काले काले मया सम्बोध्यमानेषु समाजेषु ये संन्यधीयन्त, अहिंसाविषयकानुपन्यासांश्च प्रत्यपद्यन्त ते यदि तान् काले कालेऽतिवर्तेरंस्तर्हि शीघ्रग्राहि मे मनो बलवत् संक्षुभ्यति । अतश्चाहं न वक्तुमीशे तदाहं किं कर्तुमकर्तुं वा प्रभवामीति । अन्त्येऽस्मिन् पुण्याहे[1] सर्वान्वः प्रबोधयामि योऽयं नो युष्मासु विश्वासो यमुपाश्रित्य चाहमन्त्येऽस्मिन्युद्धे प्रवृत्तः स नो घातनीय इति ।

नाहं प्रमाथमध्यक्षयितुमीहे । यद्यप्यहं जाने भरतवर्षीयाः प्रमाथं कर्तुमर्हन्तोच्छेयुश्चेत् । परं नैषा मे पद्धतिरस्ति । आशासे च न कर्हिचिद्भवितेत्युक्त्वा वचः समहरत् ।

वैशाखे कृष्णप्रथमायां कल्ये[2] श्रीगान्धिनः स्वेच्छासेवकाः कटाहत्रये लवणं समभरन् । रक्षिणां पर्यवेक्षकस्तान् कतिपयान् सहादाय तत्रागच्छत् । परं स्वेच्छासेवकास्तत् परितो मण्डलाकारेण निरन्तरमतिष्ठन् । एवमवस्थिते रक्षापुरुषा अविहत्य[3] तत्कार्यं प्रत्यागच्छन् । एतदधिकृत्य महात्मा स्वेच्छासेवकान्संबोधयन्नवादीत्—इतः पूर्वमिदमेवाहं युष्मानुपादिशं युष्माभी रक्षिभिर्वो बद्धमुष्टिभ्यो लवणस्याच्छेदो विरोद्धव्यः । तैः क्रियमाणा हतिततयश्च जोषमनुद्धतं च सोढव्या इति । नाहमेतावता परितुष्यामि । अतः परं प्रचिक्रमिषामि । इच्छाम्यतः प्रभृति यूयमात्मानं न केवलं मुष्टिबद्धस्यानर्घस्य निक्षेपस्यापि तु लवणकटाहेषु संप्रति संभ्रियमाणस्य शेवधेर्गोपां[4] गणयध्वमिति । इमं शेवधिं प्राणैर्गोपायत यदि

---

१. पुण्यं च तदहश्च पुण्याहम् राजाहःसखिभ्यष्टच् । पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा ।

२. प्रभाते ।
कल्यं प्रभाते क्लीबं स्यात्कल्यो वाक्श्रुतिवर्जिते ।
सज्जनीरोगदक्षेषु कल्याणवचनेऽपि च ।। इति मेदिनी ।

३. विघ्नमनुत्पाद्य । वा ल्यपि इत्यनुनासिकलोपः ।

४. गोपाः परित्राता । आतो मनिन्क्वनिब्वनिपश्च इत्यत्र चकारानुकृष्टो विच् ।

तदस्य देयं मूल्यम्। यदा रक्षापुरुषाः कटाहाभिद्रवेच्छयाऽऽयान्ति तान् परिवेष्टयत। मा ते तावत्तान् स्प्राक्षन् यावन्न युष्माञ्शारीरेण बलेनाभिभावयेयुः। युष्माकं दुःखसंवेदनाया न केवलं स्वराज्यमुदेष्यत्यपि तु तद्रक्षार्था निःप्रमाथा वाहिनीति।

श्रीगान्धी डाण्डीतश्चारवादसंज्ञं स्वल्पमेकं ग्रामगच्छत्। चारवाद इत्यत्र केवलं द्वादशशतं जना वसन्ति। अतः कतिचित्सु नल्वेषु[1] धरासनेत्याख्यः प्रदेशो यत्रास्ति राजकीया लवणशिल्पशाला।

एतदभिमुखे नातिविप्रकृष्टे प्रदेशे महाञ्जनसंनिपातोऽभूत्। तत्र संनिपतितैरनल्पसंख्यैर्ग्रामीणैः श्रीगान्धी नूतनेन प्रकारेण जयतु जयतु लवणतस्कर इति घोषणाभिः सभाजितः। अनेन सभाजनेन प्रयुक्तो महात्मा गुर्वर्थामेकां घोषणामकरोत्।

इमा जनघोषणा अधिकृत्य सोऽभणत्—अहमभिनवं लवणतस्कर इति शब्दं[2] यथा रोचये न तथा महात्मेति। अद्यत्वे महात्मेति व्यपदेश इह जनपदे सुप्रापः, परं लवतस्करता दुरापा। लवणन्यासादल्पीयस्या मात्राया उद्धरणेन न वयं लवगतस्करतामापद्यामहे। सा हि धरासनेत्यत्र सञ्चितानां लवणचयानामात्मसात्क्रिययैव लभ्या। वयं तावदेव लवणतस्करा इति व्यपदेशभाजो भवामो यावल्लवणमाददाना महान्तं क्लेशं सहामहे। स्यादेतदवमाचरतां नः शिरोऽस्थीनि भज्येरन् एवं सत्यपि प्रशान्तैरनाक्रोशैरस्माभिः सर्वा ताडना सोढव्या। तदा कारुणिकः परमेश्वरः सदयं नो द्रक्ष्यति। अहं विश्वसिमीतरत्रापि जगति करुणा समस्ति। परमार्थलवणतस्करः स्यामित्युत्कटो मेऽभिलाषः। यदि यूयमप्यहमिव परमार्थलवणतस्करा बुभूषथ, तदात्मानं शुन्धत खद्दराख्यं वासः परिधत्त सुरापानं च विजहीत। तदाहमनुशासिष्यामि धरासनां गच्छता ऽत्रस्कन्दत यथापेक्षं च लवणं गृह्णीत ब्रूत च वयमस्य सर्वस्येश्महे इति।

---

१. नल्वः किष्कुचतुःशतम्—इत्यमरः।

२. शब्दो व्यपदेश उपाधिर्वा। द्वितीयगामी नहि शब्द एष नः—इति रघौ।

अन्यत्र लोकानुपदिशन् श्रीगान्धी धरासनाशिल्पशालाक्रमं चिन्तयामि, बह्वोः कालात् प्रागेव च तं सिषाधयिषामीति प्राख्यापयत्। अनेन प्रख्यापणेनोद्वेजिता राजमन्त्रिणोऽस्य धरणं बुद्धावकुर्वन्।

महात्मनः आसेधः

वैशाखे शुक्लसप्तम्यामर्धरात्रे मण्डलस्य धर्माध्यक्षो मण्डलस्य रक्षिपर्यवेक्षकश्च स युधैर्विंशत्या रक्षिभिः समेतौ जला पुरतः कराडीं प्रति प्रास्थिषाताम्। अचिरेण च तं प्रदेशमध्यगाताम्। तत्र श्रीगान्धी कञ्चित् कालं निविष्ट आसीत् स्फुरत्प्रकाशाभिर्दीपिकाभिस्तौ खट्वामधिशयानं महात्मानमभ्यावर्तेताम्। तन्मुखे च तद्विलसनमकुरुताम्। तेन सोऽजागः। रक्षिणः खट्वां पर्यक्षिपन्। श्रीगान्धी धर्माध्यक्षादीनपृच्छत्—भवन्तो मां जिघृक्षन्ति किम्। धर्माध्यक्षः प्रत्यवोचत्—बाढम्, वयं भवन्तमासेद्धुमादिष्टाः। ततो महात्माऽन्वयुङ्क्त—किं दन्तान् पुनीयामाहोस्विन्नेति। रक्षिपर्यवेक्षकः प्रत्यभाषत—न वयं दन्तपवनं विरुन्ध्म इति। यदा श्रीगान्धी कूर्चकेन दशनेषु लवणमर्पयन्नासीत् तदा स्वेच्छासेवकास्तत्र समवायन्। ततः स मण्डलस्य धर्माध्यक्षमप्राक्षीत् को मेऽभियोगो येनाहमासिद्ध इति। इत्थं विज्ञप्तो धर्माध्यक्ष इत्यधिकारपत्रमवाचयत्—

यतो राजमन्त्रिणः श्रीमोहनदासकर्मचन्द्रस्य गान्धिन उद्योगं सोद्वेगं पश्यन्त्यतस्त आज्ञापयन्ति सप्तविंशत्युत्तराष्टशतोत्तरसहस्रमिते खिस्तवत्सरे लब्धोदयेन पञ्चविंशेन नियमेन सोऽवरोद्धव्यः। यावच्च राजमन्त्रिण इच्छेयुस्तावत् कारायां रक्षणीयः, तदर्थं च यरोडाकारामह्नाय[१] नेय इति।

इदं च पत्रं मुम्बाराजमन्त्रिभिः स्वहस्तपरिचिह्नितमासीत्। वाचित एतस्मिन् पत्रे श्रीगान्धी नितान्तेन प्रश्रयेण महानयं प्रसाद

१. सपदि। स्राग्झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते—इत्यमरः।

इत्यवादीत्। सज्जोऽस्मि गन्तुम्। केवलं काश्चित् कला दैवतं प्रार्थयिष्य इति चाब्रवीत्। ततः सामवायिकं दैवतप्रार्थनमभूत्। खारेनामा पण्डिततल्लजः श्रीगान्धिनोऽभीष्टां गीतिकामगायत्। पर्यवसित एतस्मिन् महात्मा राजप्रतिनिधिमुद्दिश्य ह्यो विन्यस्ताक्षरं पत्रं स्वेच्छासेवके न्यास्यत्। एवं संविदधानं महात्मानं त्वरतां भवानित्ययाचद्रक्षिणामध्यक्षः।

एवं विज्ञप्तः श्रीगान्धी हस्तनेयं प्रसेवं तर्कुटीं श्रीभगवद्गीतापुस्तकमाश्रमप्रार्थनापुस्तकं कतिपयीस्तूलपूणीश्चादत्त। तदा सहेतिभिः कतिचिद्भी रक्षिभिरध्यासितपूर्वे मोटराख्ये याने समास्तां भवानिति प्रार्थितः स तत्रोपाविशत्। उपविशन्तं तं कश्चित् स्वेच्छासेवक उपेत्यायाचत तात श्रीमत्यै कस्तूरबाय्यै सन्देशः कश्चिद् हारयितव्यश्चेदुच्यतामिति। धीरा सा सीमन्तिनी, न तस्या अस्ति सन्देशव्यपेक्षेत्युक्त्वा स आसनं पर्यग्रहीत्। यानं चापवाहितमभूत्।

यरोडाकारामवाप्य महात्मेत्यलापीत्—सौख्यस्य सुस्थतायाश्चानेन संविधानेन सुतरां परितुष्टोऽस्मि। यात्रा चातिरुचिराऽभूदिति। तत्र स कारापर्यवेक्षकाणां मूर्धन्ये मेजरडायल् इत्याख्ये समर्पितः।

बन्दिग्रहं गृहीतस्य श्रीगान्धिनोऽद्योपसप्ता मासाः। नृणां श्रेष्ठो मुनिवृन्दारकवृन्दवन्द्यः[1] स कारायां निरुद्धः कालं क्षपयति। तेन प्रवर्तितः संपरायोऽद्याप्यनारतं प्रवर्तते। षष्टिसहस्रं योद्धारश्च बद्धाः। शतशोऽभिरूपाः[2] सुकुमाराः कुमारा अनवद्यहृद्यरूपा व्युत्पत्तिमत्यः पतिवत्न्यः[3] स्तनन्धयान् धापयन्त्यो जामयः श्रीमन्तोऽभिजनवन्तो ज्ञानवन्तः सहस्रशो युवानः स्थविराश्च सहर्षं कारानिरोध-

---

१. मुनिप्रवरनिवहैः स्तुत्य इत्यर्थः। वृन्दारकनागकुञ्जरैः पूज्यमानमिति समासः। वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु—इति मेदिनी।

२. मनोज्ञाः। प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः—इत्यमरः।

३. पतिवत्न्यः जीवद्भर्तृकाः। अन्तर्वत्पतिवतोर्नुक्।

  

मलप्सतेति प्रतिहार्यमिव[1] संवृत्तम् । सत्यमेव जयते नानृतम्, यतो धर्मस्ततो जय इत्यनाशङ्क्यं श्रुतिस्मृती ब्रूतः । यदि श्रौती स्मृत्युदिता वा वाग् विप्लुतार्था न भवति यथा नः प्रत्ययस्तदा ध्रुवं महात्मा जेष्यति ध्रुवं च भारतं वर्षं स्वातन्त्र्यमाप्स्यतीति ॥

इत्युपाध्यायश्रीचारुदेवशास्त्रिणः कृतौ श्रीगान्धिचरिते
षष्ठः परिच्छेदः ॥

॥ सम्पूर्णश्चायङ्ग्रन्थः ॥



---

१. प्रतिहारः माया स एव प्रातिहार्यम् । स्वार्थे ष्यञ् ।

